# श्रीमदभिनवविद्यातीर्थयशोभूषणम्







पिशुपाटि सुब्रह्मण्यशास्त्रि
प्रणीतम् ।




श्रीगुरुचरणारविन्दाभ्यां नमः ।

# श्रीमदभिनवविद्यातीर्थयशोभूषणम् ।

अभिनवविद्यानाथ, व्याकरणविद्याविशारद

## पिशुपाटि सुब्रह्मण्यशास्त्रि

प्रणीतम् ।

तत्सूनुकृत व्याख्या संवलितम्

प्रकाशकः
श्री अभिनव विद्यातीर्थ
इडुकेषन ट्रस्ट
मद्रास्

मुद्रक : श्रीमती मीना सुब्रह्मन्यम्
श्री अभिनव विद्यातीर्थ इडुकेषन ट्रस्ट, मद्रास्
श्री पिशुपाटि सुब्रह्मण्य शास्त्री, राजमन्द्री प्रणीतम्
कल्पा प्रिन्टर्स एण्ड पब्लिषर्स प्रा० लि०
पी-१४२, जी० ब्लोक, न्यू अलीपुर, कलकत्ता-५३

१९७७

Sri Jagadgurucharanaravindabhyam Namaha.

# ABHINAVAVIDYATHEERTHAYASOBHUSHANAM

## ABHINAVAVIDYANATHA

## PISUPATI SUBRAHMANYA SASTRI PRANEETAM.

## TATSUNUKRITA VYAKHYA SAMVALITAM.

*Publishers :*

Sree Abhinava Vidyatheertha

Education Trust

Madras

Printed by Smt. Meena Subrahmaniam for
Sree Abhinava Vidyatheertha Education Trust Written by
Shri Pisupati Subramanya Sastry, Rajamundry,
at KALPA PRINTERS AND PUBLISHERS PRIVATE LTD.,
P-142, G. Block, New Alipore, Calcutta-53.

1977

॥ ॐ ॥

# श्रीमदभिनवविद्यातीर्थयशोभूषणम्

## प्रकाशाख्यव्याख्यासमेतम्

### विषयानुक्रमणिका

—❀—

| क्रमः | विषयः | | | पृष्ठम |
|---|---|---|---|---|
| ४६. | पुनरुक्तवदाभासः | ... | ... | ३४ |
| ५०. | लाटानुप्रासः | ... | ... | ३४ |

— अथार्थालंकाराः —

—:o:—

॥ ॐ ॥

# ग्रन्थाविष्करणसमये ग्रन्थकर्ता उक्ताः श्लोकाः

---

१. आविष्कर्ता कृतेर्भर्ता, द्वाविमौ जगतीगुरू।
अहो भाग्यमहोभाग्यं, यशोभूषाकृतेर्मम ॥

२. कार्यकर्ता कृतेःकर्ता मुद्रकर्ता त्रयोऽप्यमी ।
अद्विजिह्वाः पृथग्देशाः, सुब्रह्मण्याःकृतेर्गुरोः ॥

मुद्राकर्ता कलकत्तानगरे, कृतिकर्ता राजमहेन्द्रनगरे कार्यकर्ता मद्रासनगरे वर्तन्ते । तथापि एते सुब्रह्मण्याः त्रयोऽपि अद्विजिह्वाः । सुब्रह्मण्यस्वामी तु द्विजिह्वः ।

३. कविर्वृद्धः कृतेर्नेता, यतीन्द्रोविजितेन्द्रियः ।
कृतिश्शृङ्गारभूयिष्ठा, श्रोतव्या रसिकैर्बुधैः ॥

—❀—

॥ ॐ ॥

श्री गुरुचरणारविन्दाभ्यां नमः ।

# श्रीमदभिनवविद्यातीर्थयशोभूषणम्

## भूमिका ।

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिस्सन्निधिं क्रियात् ॥

वेदान्ता अपि ब्रह्मप्रति पादुकतया परमुत्कृष्यन्ते । वैशेषिकादेरीश्वरप्रतिष्ठापकतया जगत्पूज्यता । जैमिनि—महर्षिणाऽपि पुरुषाश्रितस्य गुणश्रेष्ठस्य धर्मस्य जिज्ञासा-द्वारेण महापुरुषगुणवर्णनमेव शास्त्रस्य प्राणा इत्यङ्गीकृतम् । प्रबन्धराशेर्महापुरुषगुणवर्णनं हेम्नः परमामोदः । इत्यालङ्कारिकमतम् । अतश्च—

१. श्लो ॥ उद्भट मम्मट रुद्रट—
भामह वामन दीक्षित भोजादीन् ।
नत्वा कृतिं विधास्ये,
पूततमां देशिकेन्द्रगुणभरिताम् ॥

२. विद्यातीर्थगुरोरस्य, गुणानाश्रित्य निर्मिता ।
यशोभूषाकृतिश्चेयं, परमार्थविदां मुदे ॥

३. विद्यानाथकृतेरेक, नायकाया महोन्नतिम् ।
दृष्ट्वा लक्षण सामग्री तदीया प्रायशो वृता ॥

४. कृतिरभिनव विद्यानाथ विद्वत्प्रणीता,
पतिरभिनवविद्यातीर्थनामा यतीन्द्रः ।
इयमभिनवसृष्टिर्नोकृता प्राक्कवीन्द्रै—
रभिलषति ततस्सा विद्वदामोद मुद्राम् ॥

५. पतिरभिनवो विद्यातीर्थो जगद्गुरुकुञ्जरः,
कविरभिनवो विद्यानाथस्सुभाषितशेवधिः ।
कृतिरभिनवा वाचां वीची स्रवन्मधुमाधुरी,
त्रयमभिनवं केषां तोषं करोति न तत्सताम् ॥

६. सत्कृतावप्रगल्भानां, दुषतेः कृशतेर्यथा ।
गुणो दोषाय वृद्धिस्तु, कार्श्याय भवतस्तथा ॥

इति
कृतिकर्ता
पिशुपाटि सुब्रह्मण्यशास्त्री ।
RAJAHMUNDRY-4.

## पण्डिताशयः ।

श्री जगद्गुरुचरणारविन्दाभ्यां नमः ।

---

व्याकरण विद्या विशारद, शतावधानि, अभिनव विद्यानाथ, ब्रह्मश्री पिशुपाटि सुब्रह्मण्यशास्त्रिवरेण्यैर्विरचित मभिनवविद्यातीर्थ यशोभूषणनामक मलङ्कारग्रन्थं सव्याख्यान महमद्राक्षं, सविमर्श मामूलचूडमपठञ्च ।

नायकगुणालङ्कारप्रकरणत्रयपरिमितस्य ग्रन्थराजस्यास्य कृतिस्वामिनः श्री शृङ्गगिरि पीठाध्यक्षा, निरन्तर ब्रह्मनिष्ठा, न्यायवेदान्तादि षड्दर्शन पारावार पारीणा इति प्रमोदस्थानमस्माकम् । बह्वोऽलङ्कारग्रन्धा वर्तन्ते । तेषु कामचारः कवयितुः । अत्र तु परमहंस परिव्राजकाचार्यवर्यान् जगद्गुरून् नायकत्वेन स्वीकृत्यालङ्कार ग्रन्धनिबन्धनं महाकवीनामपश्चिमानामपि न सुसाधम् । लक्ष्य निरूपण विषयेचात्र कवे रसिधारावलेहनमेव । एतत्कविवरेण्या लक्ष्य लक्षणनिरूपणे सुरुचिरया हृदयङ्गमया रीत्या स्वीयप्रतिभयाच कुत्राप्यौचित्यभङ्गलेशस्यापि स्थान मदत्वा आद्यन्तं पीठाध्यक्षेषु परां भक्तिं, रचनाचातुर्यञ्च प्रदर्श्य सर्वथा कृतार्था अभवन्नित्यत्र न संशयः । अत्र शतावधानिभिः प्रायशः प्रतापरुद्रीयलक्षणसामग्री स्वीकृता । रचनायां वैदर्भीरीतिस्समादृताऽपि स्थलविशेषेषु गौडी रीतिरपि नानादृता । द्राक्षापाक एव प्रायशो दृश्यते । प्रसादगुण

भूमिष्ठा रचना। काव्यजीवितं व्यङ्ग्यवैभवश्चौचित्येन परिपोषितम्। कविताधारा गाङ्गझरी। व्याख्या च सविमर्शलक्ष्यलक्षणानुकूला। एतादृशमदृष्टपूर्वं नव्यपथमाश्रित्य पवित्रं पण्डित—हृदयङ्गमं ग्रन्थं विरचय्य विद्वत्कवीन्द्रास्सुब्रह्मण्यशास्त्रिणः, ग्रन्थरूपा दिव्यवाणी, तद्ग्रन्थपठनेन जगद्गुरुचरणानामन्तेवसन्तः अस्मादृशाश्च धन्या इति मन्यामहे।

Rajahmundry
19-9-1977

इत्थं,
कोल्लि अनन्तपद्मनाभ शास्त्री
*Retired Principal,*
S. G. V. P. Oriental College,
Seethampeta,
Rajahmundry. (A.P.)

ॐ

# श्रीगुरुचरणारविन्दाभ्यां नमः ।

# अभिनवविद्यातीर्थयशोभूषणम् ।

सुब्रह्मण्यशास्त्रि प्रणीतम् ।

## अथ नायकप्रकरणम् ।

अथ महाकुलीनत्वादिनायकगुणा निरूप्यन्ते—

महाकुलीनतौज्ज्वल्यं महाभाग्यमुदारता ।
तेजस्विता विदग्धत्वं धार्मिकत्वादयो गुणाः ॥

१. महाकुलीनता नाम कुले महति सम्भवः ।

यथा

भुवि विधिरसृजद्यं प्रार्थितो मौनिवृन्दै
स्स जयति गुरुवंशो दक्षिणाम्नायपीठे ।
लसति सपदि तस्मिन् धर्मसंस्थापनार्थं
पुनरभिनवविद्यातीर्थरूपेण शम्भुः ॥

### प्रकाशाख्या व्याख्या ।

अन्तराय तिमिरोपशान्तये
शान्तपावन मचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे
मन्महे किमपि तुन्दिलं महः ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे।
सर्वदा सर्वदास्माकं सन्निधिस्सन्निधिं क्रियात्।
षट्चक्रोपरि शोभिता शिवमनःप्रह्लादने दीक्षिता
योगीन्द्रैः समुपासिता निजहृदि श्रीद्वादशान्ताम्बुजे।
उत्पत्तिस्थितिनाशकार्यकरणे भिन्नस्वरूपा च या
साऽस्मद्वाचमलङ्करोतु धिषणाजाड्यांधकारापहा॥

आबाल्यादपि शिक्षितं सुचरितं येन त्रयीसम्मतं
गीर्वाणान्ध्रसुसाहितीसुकविते यस्माद्गुरो रागते।
आवाभ्यां विवृतिर्जगद्गुरुकृते र्यन्निर्मितायाः कृता
सुब्रह्मण्यसुधीन्द्रमेव पितरं भक्त्या तमावां स्तुवः॥
वन्दावहे ऽनसूयात्रिसदृशौ पितरौ मुदा।
पितृव्यावाढ्यविद्वांसौ श्वशुरौ पण्डितोत्तमौ॥
(अत्र पितृव्यशब्देन जगद्विख्यातविद्वत्कवीन्द्रौ श्रीचिदम्बर विश्वेश्वरशास्त्रिणौ विवक्षितौ। श्वशुर शब्देन तर्कवेदान्त व्याकरणशास्त्र सार्वभौमौ श्रीमण्डलीक वेङ्कटशास्त्रि पोतुकुच्चि सुब्रह्मण्य शास्त्रिणौ विवक्षितौ।)

श्री सीतारामशास्त्री च
ज्ञानानन्दश्च सोदरौ।
व्याख्यां कुर्वः प्रकाशाख्यां
तातपादकृतेर्नवाम्॥
यत्तन्निगूढ मखिलं
यथाशक्ति प्रकाश्यते।

नामूलं लिख्यते किञ्चि
न्नानपेक्षित मुच्यते ॥

अथ तत्रभवान् सुब्रह्मण्यशास्त्रिनामा महाकविः अभिनवविद्यातीर्थयशोभूषणं नामालङ्कारोदाहरण प्रबन्धं चिकीर्षुः चिकीर्षितार्थस्याभिनवविद्यातीर्थ स्वामिरूपेणावतीर्णस्य शम्भोरिष्टदेवतारूपस्य संकीर्तनरूपमङ्गलस्याविघ्नपरिसमाप्ति फलसाधनत्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुख" मित्याचार्य दण्डिवचनादाशीराद्यन्य तमस्य प्रबन्धमुखलक्षणत्वाच्च, अभिनव विद्यातीर्थ महास्वामिनः दक्षिणाम्नायपीठनिवासरूपं वस्तु वक्ष्यमाणार्थानुगुणं निर्दिशति,

भुवीति-सृज विसर्गे-तुदादिः सकर्मकः। मुनेः कर्म भावो वा मौनं, तदस्यास्तीति मौनी। धरति विश्वं धर्मः। 'धृञ्‌धारणे' अर्तिस्तु (उ१-१४०) इत्यादिना मन्। "वेदप्रमाणकः श्रेय स्साधनं धर्मः" इति मनूक्तमेव जैमिनिहारीतादयो मुनयः धर्मलक्षणं प्रणिन्युः। आम्नायपीठाः (मठाः) श्रीशङ्करभगवत्पाद प्रतिष्ठिता श्चत्वारः। इदं मालिनीवृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणम्। अत्र भूलोकस्य कैलासातिशायि धर्मवैभवं, अभिनवविद्यातीर्थमहा स्वामिनां सदाशिवसादृश्यं च गम्यते।

२. अथौज्ज्वल्यम्—

रूपसम्पन्नदेहत्व मौज्ज्वल्यं परिकीर्त्यते।

यथा—

जयत्ययं महास्वामी महत्या रूपसम्पदा ।
वसन्तो वा जयन्तो वा सशरीरः स्मरोऽथवा ॥

व्याख्या—जयतीति । जयति सर्वोत्कर्षेण वर्तते । महास्वामीत्यनेन कृतिभर्तुः केन्द्रपीठाधिपत्यं व्यज्यते । अत्र वसन्त जयन्त मन्मथत्वोत्प्रेक्षया रूपसम्पत्तिरुक्ता ।

३. अथ महाभाग्यम्—

३. धर्मराज्याधिपत्यं यत्तन्महाभाग्यमुच्यते ।

यथा—

आरुह्य श्रुतिधर्मराज्यशुभदं व्याख्यानसिंहासनं
पूजानम्रनरेन्द्र मौलिगमणीमायूखनीराजितम् ।
शिष्टानुग्रहदुष्टनिग्रहपरां धर्मव्यवस्था मयं
पञ्चत्रिंशजगद्गुरु वितनुते शृङ्गाद्रिपीठाधिपः ॥

व्याख्या—आरुह्येति । श्रुतिधर्मराज्यं वेदोक्तधर्मपरिपालन युक्तं राज्यम् । अधर्मनिरासनधर्मपरिपालनाभ्यामखिल भारतभूमि-संरक्षणादस्य स्वामिनो महाभाग्यत्वम् । मौलिः किरीटम् । "मौलिः किरीटे धम्मिल्ले चूडायामनपुंसक" मिति मेदिनी । मायूखं मयूखानां समूहः । तनुते 'तनु विस्तारे' ।

४. अथौदार्यम्—

४. यद्विश्राणनताच्छील्य मौदार्यं तन्निगद्यते ।

यथा—

न चान्यो दाताऽस्ते जगति सदृशस्तीर्थयतिना
गुणश्रेणीशंसापिहितदिगधीशाच्छयशसा ।
यदीया विद्वांसो धनजनमणीहर्म्यविभवाः
क्रियन्ते मृष्टान्नप्रमदकलिता नित्य मितरे ॥

व्याख्या—तच्छीलस्य भावः ताच्छील्यम् । विश्राणने ताच्छील्यमिति शिवभागवतवत्समासः । उदाहरति । न चान्य इति—गुणश्रेणीशंसया पिहितमाच्छादितं तिरस्कृतं दिक्पतीनां यशो येन तेन । अत्र समृद्धवस्तुवर्णनादुदात्तालङ्कारः । इदं शिखरिणी-वृत्तम् । "रसै रुद्रै श्छिन्ना यमनसभलागः शिखरिणी" इतिलक्षणम् ।

५. अथ तेजस्विता—

जगत्प्रकाशकत्वं यत्तेजस्वित्वं तदुच्यते ।

यथा—

श्रीमद्भारतभूमिवासिजनतामोहान्धकारापहे
विद्यातीर्थगुरोर्नवस्य जयिनस्तेजोरवौ भास्वति ।
अज्ञातद्युतिभिस्सुदीप्ति रनिदंपूर्वेय मालोक्यते
लोकालोकगिरीन्द्र पश्चिमघनीभूतोपलैरप्यहो ॥

व्याख्या—श्रीमदिति । अत्र सूर्यप्रकाशरहितयोरपि देशकालयो रतिवेलप्रकाशजननाल्लोकोत्तरमस्य गुरोस्तेजस्वित्व-मिति भावः ।

६. अथ वैदग्ध्यम् ।

कृत्यवस्तुषु चातुर्यं वैदग्ध्यं परिकीर्त्यते ।

यथा—

कौशल्यं किमु कथ्यते मठपते रेतस्य विद्वत्प्रभोः
लक्ष्मी शारदयोर्विरूद्धमतयोर्यत्रार्जवं पुष्कलम् ।
किं चाभ्यां सदृशोपचारमुदितां शृङ्गाद्रिपीठेश्वरीं
निःसापत्न्यमसौ विभर्ति यतिराण्णित्योत्सवैर्लालिताम् ॥

व्याख्या—कौशल्यमिति । सपत्नः शत्रुः। तस्य भावः सापत्न्यम् । निर्गतं सापत्न्यं निःसापत्न्यमविरोध इत्यर्थः । अन्योन्यं विरुद्धानां लक्ष्मीशारदा पीठाधीश्वरीणां परस्परानुरागजननेन वशी करणाद् वैदग्ध्यमुक्तम् । नवविद्यातीर्थपादाः वितरणविद्वद्गोष्ठी भक्तरंजनादिभिः लक्ष्मी सरस्वतीपीठीश्वरीः निर्विरोधं तोपयन्तीति भावः । अत्राभ्यामित्यत्र अप्रधाने तृतीयाविधानेऽपि लक्ष्मीशारदयो श्शाब्दएवोपसर्जनभावः । न त्वार्थः । "सह शाखया प्रस्तरं प्रहरति" इत्यत्र प्रहरणे शाखाप्रस्तरयो रिवात्र लक्ष्मी सरस्वत्योः पीठीश्वर्या अपि प्रधानभावस्योपपत्तेः । अन्यथाऽनौचित्यं स्यात् ।

७. अथ धार्मिकत्वम्—

धर्मैकायत्तचित्तत्वं धार्मिकत्व मुदीर्यते ।

यथा—

विजितेष्वप्यभीभावं स्वप्नेऽप्यनृतभाषणम् ।
अगुणेऽप्यगुणारोपं मठेन्द्रोऽयं न मृष्यति ॥

'धार्मिकत्वादयो गुणा' इत्यत्रादिशब्दग्रहणात् महामहिमत्व पाण्डित्यप्रभृतयो गृह्यन्ते ।

व्याख्या—धार्मिकत्वमाह-धर्मेति। धर्मं चरत्यासेवत इति धार्मिकः। "सक्तत्कृतधर्मो न धार्मिकः" इति वृत्तिकारः। तस्य भावः धार्मिकत्वम्। उदाहरति-विजितेष्वपीति। अभीभावः तिरस्कारः। 'निकारश्चाप्यभीभावो न्यक्कारश्च पराभवः' इत्यमरः। उपसर्गस्य घञ्यमनुष्ये वहुलम्' इति सूत्रेण अभीत्युपसर्गस्थस्येकारस्य दीर्घः। मृष्यति सहते। विजितादिष्वप्यभीभावादिक मसहमानस्य गुरोः धार्मिकत्वं किमु वक्तव्यमिति भावः।

८. अथ महासहिमत्वम्—

तन्महासहिमत्वं स्याद्या पुनर्देवतात्मता।

यथा—

परमशिववतारा भारतीसम्प्रदाया
जगति परमहंसा ज्ञानविद्यावनार्थाः।
जयति सपदि तेषां दक्षिणाम्नायपीठे
पुनरभिनवविद्यातीर्थनामा महात्मा॥

व्याख्या—परम शिववतारेति। वतारा इत्यत्र भागुरिमतानुसारेण अवेत्यत्राकारस्य लोपः। अत्र गुरोः शिवावतारत्वेन देवतात्मकत्वान्महामहिमत्वम्।

९. अथ पाण्डित्यम्—

सर्वविद्याधिकत्वं यत् पाण्डिव्यं तदुदाहृतम्।

यथा—

शास्त्रार्थैः परितोषयन् सुमनसः षड्दर्शनीपारगान्
धिन्वन् काव्यरसप्रदर्शनपरैस्सूक्तैः कविब्रह्मणः।

श्रीविद्योपनिषद्रहस्यकथनैः संतर्पयन्सांत्रिकान्
विद्योद्यानवने सदा विहरते तीर्थो वसन्तो यथा ।।
वर्तन्ते वहवो मठाधिपतयः किं तैरनीदृग्विधै
रीदृग्विश्वजनीनवादमहिमा नान्यो महास्वामिनः ।
यद्वाक्यार्थसुधां श्रवोऽञ्जलिपुटैः पेपीयमाना बुधाः
किंकुर्वाणगणा भवन्त्यनुसमं हेरम्बगोष्ठीषु ते ।।

व्याख्या—शास्त्रार्थैरिति । षण्णां दर्शनानां समाहारः षड्दर्शनी । 'द्विगो' रिति ङीप् । 'पाणिने र्जैमिनेश्चैव व्यासस्य कपिलस्य च । कणादस्याक्षपादस्य दर्शनानि षडेव हि ।।" धिन्वन् प्रीणयन् । श्रीविद्योपनिषदः श्रीविद्याप्रतिपादिका उपनिषदः । त्रिपुरा तापिनी भावना वह्वृचोपनिषदादयः । वर्तन्त इति । ईदृग्विधा अभिनवविद्यातीर्थसदृशपरिपाटी । तद्रहितै रनीदृग्विधैः । तत्कथमित्याशङ्क्य महास्वामिनि विशेषमाह-ईदृगिति । विश्वस्मै जनाय हितो विश्वजनीनः । वादमहिमा यस्य स तथोक्तः । वाद-महिमान माह-गणपति नवरात्र वाक्यार्थसभासु सुधासदृश निरुपमान वाक्यार्थ प्रदर्शनेन विद्वल्लोको वशीकृत इति । पा पाने इत्यस्माद्धातोः क्रियासमभिहारार्थे यङि ।

अथ नायकगुण निरूपणानन्तरं नायक स्वरूपं निरूप्यते

१०. यशः प्रतापसुभगो धर्मकामार्थतत्परः ।
धुरंधरो गुणाढ्यश्च नायकः परिकीर्तितः ।।
यशः प्रतापाभ्यां सुभगत्वं यथा—

११. परास्तदुर्वादि गृहीतवादो
विद्यावदाताऽचरणो यतीन्द्रः ।
गाङ्गेय काण्डैक सितातपत्त्री
छत्रप्रतापालियशो विभूतिः ॥

व्याख्या—अत्र प्रथमपादे दुर्वादिगृहीतवादानां साकल्येन खण्डनात् जगद्गुरोर्वादप्रतापो व्यज्यते । द्वितीयपादे स्वामिनां सर्वविद्यापारंगतत्वेन तेषामाचरणस्यावदातत्वोक्त्या दिगन्त विश्रान्तयशः प्रतीयते । एतद्व्यङ्ग्यद्वयं सुवर्णकाण्डविशिष्ट सितच्छत्रत्वविभूतिरूपवाच्यस्य सिद्धिं करोतीति वाच्यसिद्ध्यङ्गरूपः गुणीभूतव्यङ्ग्य प्रभेदः ।

१२. धर्मकामार्थतत्परत्वं यथा—
महास्वामि परीवारे धर्मोऽर्थ इव वर्धते ।
अर्थो धर्मसमः कामः ताविव तौ च तत्समौ ॥
व्याख्या—ताविव धर्मार्थाविव । तत्समौ कामसमौ ।

१३. धुरीणता यथा—
लक्ष्मीं प्रीणयतेऽद्य नर्मवचनै र्वैकुण्ठवासी हरिः
भुक्त्वा ते त्रिदशा हविर्धृतियुताः तृप्ता वरं यज्वनाम् ।
यच्छन्ति प्रभवन्ति साधुनिवहा धर्मव्यवस्थाधुरं
विद्यातीर्थ जगद्गुरावभिनवे बिभ्रत्यमोघाशये ॥

व्याख्या—स्वामिनि धर्मव्यवस्थाभरं बिभ्रति सति निरन्तर धर्मसंस्थापनरूपकार्यप्रयासशून्यो हरिः वैकुण्ठवासी सन्नेव

निश्चिन्तः श्रिया सह नर्मोक्त्यादिभिर्मोदते। तथा यज्ञविघातं कुर्वतां दुष्टानामभावेन यज्वप्रदत्तहवींषि स्वीकृत्य तृप्ता सुरा वरान् ददति यज्वभ्यः। साधवः निष्कण्टकं स्वस्वकार्येषु प्रभविष्णवो भवन्ति। अनेन महास्वामिनां धर्मधुरीणता व्यज्यते।

१४. गुणाढ्यत्वं यथा—

वक्ता सहस्रास्ययुतो यदि स्यात्
सहस्रहस्तो यदि लेखकः स्यात्।
द्रष्टा सहस्राक्षियुतो यदि स्यात्
भवेद्गुरूणां गणना गुणानाम्॥

व्याख्या—वक्तेति। अत्र शेषादय एव गुरूणां गुणानां गणने समर्थाः। जगद्गुरव असंख्येयगुणा इति तात्पर्यम्।

अथ नायकविशेषा निरूप्यन्ते।

तत्र सर्वरससाधारणा श्चत्वारो नायकाः। धीरोदात्त धीरोद्धत धीरललित धीरशान्ता इति।

१५. महासत्वोऽतिगम्भीरः कृपावानविकत्थनः।
नवीनतीर्थवद्धीरो धीरोदात्तस्स संमतः॥

यथा—

भीरुं धीरं सदसि कुरुते छेत्ति दुर्वादिवादं
स्वात्मश्लाघाश्रवणसमये लज्जते नम्रवक्त्रः।
नाप्याकारान् धरति सुखरुट्सूचकान् किञ्चिदास्ये
विद्यातीर्थो गुरुरभिनवः सर्वलोकाभिरामः॥

व्याख्या—भीरुमिति। अत्र भीरुं धीरं कुरुते इत्यनेन कृपावत्त्वम्। छेत्ति दुर्वादिवाद मित्यनेन महासत्त्वत्वम्। स्वात्मश्लाघायां वक्त्रनम्रीकरणेनाविकत्थनत्वम्। मुखरुट्सूचकानामाकाराणां गोपनेन गाम्भीर्यं च प्रतीयत इत्यभिनवविद्यातीर्थपादानां धीरोदात्तत्वम्।

अथ धीरोद्धतः—

१६. उद्धतः सुलभक्रोधो दर्प्यमर्षी विकत्थनः।

यथा—

शाक्तोऽशक्तो विशति गहनं लोकजित् क्वापि लिल्ये
वामाचारा गलितहृदया भैरवा भग्नयत्नाः।
काणादास्ते नमितशिरसः कापिलाः कंप्रभाषा
इत्याक्षिप्ता निगमविमता वादिभिः पीठशिष्यैः॥

अत्र पीठशिष्याणां धीरोद्धतत्वम्।

रे रे सौगत! भेषसे, व्रज गृहं चार्वाक दूर्वासम!
क्षिप्रं त्वन्मतमद्य पश्यसि मुधा कापालिक! भ्रश्यसि।
अस्मद्वाद विजृम्भणं श्रुणुत रे! दुर्वारगर्वोद्धता
इत्येवं प्रतिवादिनः परिभवन्त्यास्थान विद्यार्थिनः॥

व्याख्या—शाक्त इति। लोकं जयतीति लोकजित्। बौद्धः जिनः। 'जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु" इति सुधा। कंप्रा भाषा वाक् येषां ते। भयकम्पिता इत्यर्थः। विमता वेदविरुद्ध मताः। लिल्ये। लीङ श्लेषणे दिवादिः। भेषृभये। गतावित्येके। भेपति भेषते। रे इति हीनसंबोधने। तस्य प्रतिवाक्यमावर्त्य मानस्य यथायोगं दर्पासूयाद्यर्थेषु द्विर्भावः। अत्र सौगतादिवाक्येषु

यथायोगमुद्भावितैर्दर्पमात्सर्यादिभि रस्मद्वादविजृम्भण मित्यात्म शलाघया चास्थान विद्यार्थिनां धीरोद्धतत्वम् ।

१७. अथ धीरललित :—

निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ।

यथा—

शास्त्रासिश्चलित स्त्रयीविमतयो भीता दिगन्तं गताः
जाता भारतभूर्विवेकमहिता वर्णाश्रमालङ्कृता ।
छात्रेऽस्मिन्नवतीर्थएव वहति श्रीपीठ सम्पद्धुरा
मित्यालोक्य सदा गुरु र्विहरते वेदान्तविद्यावने ॥

व्याख्या—शिष्यमठाधिकारिनिहितयोगक्षेमतया चिन्तारहितो निश्चिन्तः। अत एव सदा वेदान्त विद्यारूप कलासु सक्तो बभूव। शास्त्रासिरिति। छात्रः शिष्यः। नवतीर्थः भारती तीर्थः। गुरुः अभिनव विद्यातीर्थः। धुरा भारः। धुराशब्द आकारान्त इति शब्दकल्पद्रुमः। राजधुरेतिवत् धूरुत्तरपदे स्थिता तत्पुरुषादौ धुरेत्याकारान्तो भवति। अत्र अप्रतिहतशास्त्रवादादिभिः शारदाम्बानुग्रहेण शिष्यस्य धुरंधरत्वेन च भारतीतीर्थ स्वामिनि न्यस्तसमस्तभारः निश्चिन्तो गुरु रध्यात्म विद्यारूप कलासुखमनुभवतीति जगद्गुरो र्धीरललितत्वम्। इदं कवेर्वचनम्।

१८. अथ धीरशान्तः ।

धीरः शान्तः प्रसन्नात्मा धीरशान्तो द्विजादिकः ।

यथा—

इम मभिनवविद्यातीर्थहंसं प्रसन्नं

द्विजवरगुरुरत्नं सर्वसेव्यस्वभावम् ।
उदयरविमिवाम्भोजात कासारवार
स्सुजनसुकविसार्थो मोदते तं महान्तम् ॥
अत्र विप्राणां धीरशान्तत्वम् ।

व्याख्या—इममिति । धीरः विचक्षणः । शमप्रधानः शान्तः हृष्टान्तःकरणः प्रसन्नात्मा । द्विजवरश्चासौ गुरुरत्नं चेति विग्रहः । अत्र सुजनसुकविसार्थो मोदत इत्यनेन महास्वामिनां सुजन सुकविं प्रमोदाश्रयत्वेन धीरत्वम । सर्वसेव्यस्वभाव मित्यनेन शान्तिमत्त्वं च प्रतीयत इति स्वामिनां धीरशान्तत्वम् । अत्र मुदधातु-स्सकर्मकः उभयथापि शिष्टप्रयोगेषु दर्शनात् ।

अथ शृङ्गारनायका निरूप्यन्ते-
अनुकूलो दक्षिणश्च धृष्टः शठ इति स्मृताः ।

१६. अनुकूलो यथा—
एकायत्तोऽनुकूलः स्यात् ।
एकस्यां नायिकायां विशेषानुरक्तः अनुकूलो नायकः ।
यथा—
सायुज्याङ्गनया व्रतं किमु कृतं यस्याः पतिर्वर्ण्यते
विद्यातीर्थयतिः क्व तत्सखि ! महत्तस्य प्रिया स्यां यतः ।
ज्ञातं मानिनि मा शुचः पतिपुरः प्रख्याप्य नाम प्रियां
त्वां तल्लक्षणलक्षितां त्वयि सदा सक्तं करिष्ये यतिम् ॥

व्याख्या—सायुज्येति । अत्र सारूप्यमुक्तिनायिकाया वाक्यमेतत् । क्वेत्यौन्नत्ये । किमु सम्भावनायाम् । यतः व्रतात् ।

अथ सखी नायिकामाह ज्ञातमिति। नायकघटनोपायमिति शेषः। नामेति कुत्साया मनुरागोत्पादनार्थं सपत्नीनामसाख्येन नायिका-प्रकाशनस्य कुत्सितत्वात्। अत्र नायकस्य सायुज्यमुक्त्यङ्गनायां विशेषानुरागोऽन्यत्र न तथेत्यानुकूल्यम्। तल्लक्षण लक्षिता-सच्चिदा-नन्दरूपा।

अथ दक्षिणः।

२०. तुल्योऽनेकत्र दक्षिणः।

अनेकासु नायिकास्ववैषम्येण स्नेहानुवर्ती दक्षिणो नायकः।

यथा—

सालोक्याह्वय मुक्तिचन्द्रमुखया चर्यासखी प्रेषिता
सामीप्याह्वयमुक्ति वामदृशया दूती क्रिया प्रेषिता।
सारूप्याह्वयमुक्ति योषिदुदिता योगाख्यचेटी क्व वा
यास्यामीत्यनुचिन्तया यतिपतेरासीदुषा शर्वरी॥

व्याख्या—सालोक्यं सामीप्यं सारूप्यमिति त्रिविधा मुक्तिः। तस्याः क्रमेण चर्या क्रिया योग इति साधनानि। भगवत्कैङ्कर्यरूपदासभावश्चर्या। शिवविष्ण्वादि पूजाविधिः क्रिया। यमनियमाद्यष्टाङ्ग योगो योग इति। चन्द्रमुखशब्दस्य 'स्वाङ्गाच्चोपसर्जना दसंयोगोपधा' दितिङीष् वा स्यात्। ङीषभावेऽदन्तत्वेन टाप्। 'तर्केऽनुः स्या दुषा रात्रेरवसाने नमो नता' वित्यमरकोशाव्ययवर्गः। उषाशब्दः आकारान्तोऽपि दृश्यते वाचस्पति निघण्टौ। शिशुपालवधकाव्ये ११-२२ श्लोके 'अधिकरुचिरवेषा मप्युषां जागरित्वा' इति वर्तते। उषा रात्रिशेषः। अत्राप्रभात मनिश्चित-

गन्तव्यतया चिन्ताकुलत्वेन अस्य स्वामिनः नायिकात्रये समानानुरागत्वप्रतीतेः दक्षिणोऽयं नायकः।

तथा—

मानयन् फालनेत्रास्यैः शोभा लक्ष्मी सरस्वतीः।
समानं दक्षिणाम्नाय माठाध्यक्षोऽय मश्चति ॥

अत्र शोभालक्ष्मी सरस्वती रवैपम्येण माननादयं महास्वामी दक्षिणो नायकः।

२१. अथ धृष्टः।
व्यक्तागा गतभीर्धृष्टः।

यथा—

पीठश्रीपरिभोगभापि भवतस्सर्वं वपुर्दृश्यते
को दोपस्तव तत्र साहसमिदं तन्नाम दृप्तं मयि।
त्वां जाने वहुवल्लभं किमपरं स्वल्पीयसी स्यामहं
तस्यां ते प्रियताधिकाप्तविभवा या नाम किं भाषितैः ॥

व्याख्या—सालोक्यमुक्तिनायिकाया वाक्यमेतत्। एषात्र खण्डिता नायिका। स्वामिनः स्वस्मिन्ननादरं मन्यमानाऽसूयया ब्रवीति। शारदापीठलक्ष्मीसम्बन्धिहारकेयूरकिरीटादिधारण सिंहासन स्वर्णपल्यंकाद्यारो हणमहोत्सवादि भोगानुभवः तव वपुषि दृश्यते। अत्र तव दोपो नास्ति। तन्नाम मयि ग्रथितमिति यत् तदतीव साहसम्। सामीप्य सारूप्यादिमुक्ति पीठी वहु वल्लभो भवानिति जाने। तदपेक्षयाहमल्पीयसी या पीठश्रीप्राप्तविभवा

तस्यां तव स्नेहो महान्। इति कुपितायाः खण्डिताया वाक्यात् स्वामिनि धृष्टत्वं गम्यते। अल्पीयसी अल्पा दरिद्रा इति च। दृप्तं ग्रथितम्।

२२. अथ शठः।

गूढ विप्रियकृच्छठः।

नायिकामात्र विदित विप्रियकारी शठः।

यथा—

अलमभिनवविद्यातीर्थ! बाह्यै र्विलासैः
प्रणयिहृदयशून्यैरीक्षणैस्सान्त्ववाक्यैः।
तव तु हृदयहारिण्यन्तिमा मुक्तिकान्ता
कपटनटनमेतद् ज्ञातमस्मद्विधासु॥

इति व्याकरण विद्या विशारद। शतावधानि, अभिनव विद्यानाथ पिशुपाटि सुब्रह्मण्यशास्त्रि प्रणीते अभिनवविद्यातीर्थ यशोभूषणे नायकप्रकरणम।

व्याख्या—एतत्सारूप्यमुक्तिकान्ताया वचनम्। अन्तिमा मुक्तिः सालोक्यादि चतसृषु मुक्तिष्वन्तिमा मुक्ति स्सायुज्यमुक्ति रित्यर्थः। अधीरमध्या नायिका। अत्र नायिकामात्र विदित भावशून्य वीक्षणादि विधानवर्णनात् स्वामिनः शठत्वम।

इतिश्रीभारद्वाजसगोत्राभ्यां श्रीमदनसूयादेवी सुब्रह्मण्यशास्त्रि-सूनुभ्यां विश्वजनीनविद्याभ्यां विद्याभाषाप्रवीणोपाधिभ्यां सीतारामशास्त्रि ज्ञानानन्द शर्मभ्यां विरचिते अभिनवविद्यातीर्थ यशोभूषण व्याख्याने प्रकाशाख्याने नायक प्रकरणं समाप्तम।

# अभिनवविद्यातीर्थयशोभूषणम् ।

## गुणप्रकरणम् ।

अथ गुणा निरूप्यन्ते—गुणास्त्रय इति भामहादयः । दशेति वामनादयः । चतुर्विंशतिरिति भोजराजः । भोजराजस्य मतमनुसृत्यात्र गुणा निरूप्यन्ते । गुणसामान्यलक्षणं च संघटनाश्रयत्वे सति चारुताहेतुत्वम् । तत्र केषांचिद्दोषपरिहारकत्वेन गुणत्वम् । केषां चित् स्वत एव उत्कर्षहेतुत्वेन गुणत्वम् ।

२३. अर्थव्यक्ति रुदारता मधुरता गम्भीरतोदात्तता
संक्षेपः सुकुमारता च समता सौक्ष्म्यं सुशब्दात्मता
प्रौढी रीति गति प्रसाद कलिताः काव्यावतंसा गुणाः
विद्यातीर्थजगद्गुरावभिनवे सार्थाः प्रशस्ता इमे ॥

अथ श्लेषः ।
मिथः संश्लिष्टपदता श्लेष इत्यभिधीयते ।
वहूनां पदानामेकपदवदवभासमानत्वं श्लिष्टत्वम् ।

यथा—
विद्यातीर्थं मनल्पभावमवनिप्रख्यातपीठाधिप
श्रेणीशीर्षकिरीटरत्नविलसत्पादाम्बुजोद्भासिनम् ।
धर्मत्राणविनिद्र मव्यय गुणज्योत्स्नावितानावृत
व्योमावासमपारकीर्तिविभवं स्तोतुं विधाता क्षमः ॥

अत्र पठनसमये पदाना मेकपदवदवभासमानत्वात्
श्लेषो गुणः।

व्याख्या—संश्लिष्टानि सांद्राणि पदानि यस्य तस्य भावः। तदुक्तं वामनाचार्येण "यत्रैकपदवद् भान्ति पदानि सुबहून्यपि। अनालक्षितसन्धीनि स श्लेषः परमो गुणः" इति। उदाहरति-विद्यातीर्थ इति। अव्ययगुणज्योत्स्नेति लोकप्रसिद्धकौमुदी व्यतिरेकः। वितानमुल्लोचः। अत्र सर्वत्रानालक्षितसन्धिपद निवन्धनात् श्लेषो गुणः।

अथ प्रसादः।
प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते।
यथा—
विद्यातीर्थो नवीनोऽयं भ्राजते चतुराननः।
येनास्यास्यं चतुर्वेदमहावाक्यमनोहरम्॥
अत्र शीघ्रमर्थसमर्पकपदत्वात् प्रसादो गुणः।

व्याख्या—विद्यातीर्थेति। अत्र व्यवहितार्थप्रत्यायकक्लिष्ट दोषाभावतया गुणत्वम्।

अथ समता।
अवैषम्येण भणनं समता सा निगद्यते।
यथा—
अमृतमधुरिमाधःकार चातुर्य वित्ताः
सुरतरु सुमगुच्छामोद धिक्कार हृद्याः।
मुहुरभिनवविद्यातीर्थ! दिव्या गुणास्ते

जगति सहृदयानां कुर्वते श्रोत्रतृप्तिम् ॥
अत्र पाद द्वयेऽपि तुल्यवद् भणनात्समत्वम् ।

व्याख्या—अमृतेति । अमृतमाधुर्याधःकरणचातुर्यख्याताः कल्प वृक्षमञ्जरीपरिमल इव मनोहरा गुरोर्गुणाः । अत्र प्रक्रमभङ्गदोषः परिहृतः । वित्ताःप्रसिद्धाः । 'वित्रं निबन्धने ख्याते, विचारिते' इति मेदिनी ।

अथ माधुर्यम् ।
या पृथक्पदता वाक्ये तन्माधुर्यं प्रकीर्त्यते ॥
यथा—
कीर्तिश्रियः शाङ्कर पीठनेतुः
दिशां नितम्बेषु दुकूलरूपाः ।
उरःसु मुक्तामणिहाररूपाः
शिरस्सु जातीसुममाल्यरूपाः ॥
यशःप्रभा तीर्थजगद्गुरोर्दिशां
ककुद्मती विम्बतले दुकूलताम् ।
उरःस्थले मौक्तिकहारसम्पदं
तनोति शीर्षे सितमाल्यवैभवम ॥
अत्र वाक्ये पाठसमयेऽपि पृथक्पदत्वप्रतीतेःमाधुर्यं नाम गुणः ।

व्याख्या—अत्र माधुर्येपृथक्पदत्वं, दीर्घसमासाभाव इति वामनः ।

अथ सुकुमारत्वम् ।
सुकुमाराक्षरप्रायं सौकुमार्यं तदुच्यते ।

यथा—

वन्दारु वन्दनानन्दि शारदावदनेन्दुना ।
शृङ्गेरी तीर्थराजेऽस्मिन् दिनेऽप्याभाति कौमुदी ॥

व्याख्या—सुकुमारत्वं नाम सानुस्वार कोमलवर्ण वन्धत्वम् । सौकुमार्य मपरुषत्वमित्यर्थः । श्रुतिकटुरूपदोषपरिहारकत्वेन सौकुमार्यस्य गुणत्वम् । अत्र वदनेन्दुनेति रूपकादिन्दोः प्राधान्यात् कौमुदी प्राप्तिः ।

अथ अर्थव्यक्तिः ।

यत्र सम्पूर्णवाक्यत्व मर्थव्यक्तिं वदन्ति ताम् ।

यथा—

ज्ञानं भारतभूम्यधीन मधुना येनास्य संरक्षको
जातो रज्यति शृङ्गशैलमठराड्विद्याप्रवोधोदयः ।
यद्वा ज्ञानमतप्रवर्तकमहादेवावतारो ह्ययं
यत् साक्षात् वसुधामिमां वितनुते विद्यामयीं लीलया ॥

अत्र अर्थप्रतिपादने वाक्यस्य निराकाङ्क्षतया परिपूर्णत्वादर्थव्यक्तिः ।

व्याख्या—अर्थव्यक्तिरिति । तद्धेतौ तत्त्वोपचारः । तदुक्तं-यत्रार्थव्यक्तिहेतुत्वं सोऽर्थव्यक्तिः स्मृतो गुणः' इति । ज्ञानमिति-रञ्ज रागे-दिवादिः उभय पदी । अत्र विद्याप्रवोधोदयस्य शृङ्गाद्रिमठेन्द्रस्य ज्ञान संरक्षकोक्ति मात्रेण ज्ञानं भारतभूम्यधीनं कथं वा भवितु मर्हतीत्याकाङ्क्षोदयात् कथं वा वाक्यस्य निराकाङ्क्षता इति चेत् मठाधी-

श्वरस्य ज्ञानप्रववर्तक महादेवावतारत्वेन वर्णनात्सर्वमुपपन्नं भवति ।

अथ कान्तिः ।

अत्युज्ज्वलत्वं बन्धस्य काव्ये कान्तिरितीष्यते ।

यथा—

श्रीमत्तीर्थजगद्गुरोरभिनवं विद्याप्रबोधामृतं
पातुं भूतलमागतास्सुमनसो जाता यतीन्द्रा भुवि ।
आम्नायोदितधर्मकर्मसरणिं तीर्थोदितप्रक्रियां
कारंकार ममीष्टदाः क्रतुभुजो जाता मनुष्या दिवि ॥

व्याख्या—अत्युज्ज्वलत्वमिति । यदभावे पुराणचित्रच्छायेव काव्यच्छाया भवति, तदौज्ज्वल्यम् । सैवकान्तिरित्यर्थः । अत एवौज्ज्वल्यं कान्तिरित्या हुर्गुणं गुणविपश्चितः । पुराणचित्रस्थानीयं तेन वन्ध्यं कवे र्वच इत्यालङ्कारिकाः । श्रीमत्तीर्थ इति । सुमनसो देवाः । कारंकारं कृत्वा कृत्वेत्यर्थः । कृञ्धातोर्णमुल् । देवानां सागरोत्थितामृतपानस्य सत्त्वेऽपि विद्याप्रबोधामृतस्य इतः पूर्वमनास्वादितस्याभिनवमाधुरीधुरीणस्यैतस्य पानार्थं देवानां भूम्यागमनं वेदोक्त धर्म कर्माचरणप्रबोधस्यापि जगद्गुरूणां कर्तव्यान्यतमत्वात्तदुदित प्रक्रियानुसरणेन मनुष्याणां देवत्वमिति भावः ।

अथ औदार्यम् ।

विकटाक्षरबन्धत्व मार्यैरौदार्यमिष्यते ।

यथा—

धृत्वा कण्ठे कपालान् च्युतरुधिरभरान् रौद्ररूपास्सपीत्यां
पीत्वा तालद्रुहालामहमहमिकया गर्ह्य बीभत्सवेषाः ।

जग्ध्वा गार्ध्येन मांसं कटकटनिनदं भैरवाकारघोरा
नष्टाः कापालिकाग्ला जनितजनभयास्तीर्थहुङ्कारलक्ष्याः ॥

व्याख्या। विकटाक्षरबन्धत्वं नाम नर्तनबुद्ध्युत्पादक पद-विन्यासः। धृत्वेति। समाना पीतिस्सपीतिः। सहपानमित्यर्थः। 'सपीतिःस्त्री तुल्यपान' मित्यमरः। तालद्रुः तालवृक्षः। हाला सुरा। अहमहमिका—अहमिति विभक्तिप्रतिरूपकमव्ययम्, तस्य वीप्सायां द्विरुक्तिः। संज्ञायां कन् प्रत्ययः। गर्ध एवगार्ध्यं लोभ-इत्यर्थः। चातुर्वर्ण्यादित्वादौपम्यादिवत् स्वार्थे ष्यञ्प्रत्ययः। कटकटशब्दस्त्वनुकरण वाची। भैरवः कापालिकाना मिष्टदेवता। अत्र विकटाक्षरबन्धत्वरूपमौदार्यं स्पष्टमेव, इदं स्रग्धरावृत्तम्। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेय' मिति लक्षणम्।

अथ उदात्तता—

श्लाघ्यैर्विशेषणैर्योगो यस्तु सास्यादुदात्तता।

यथा—

विद्वन्मत्तेभघींकारा जयदुन्दुभिभांकृतिः।
वादास्त्रशस्त्रनिर्घोषा जैत्रयात्रा जगद्गुरोः ॥

व्याख्या—श्लाघ्यै रुचितैरित्यर्थः। घींकारादीनां मत्ते-भादीनामेवोचितत्वादिति। वैपरीत्येऽनौचित्यमनेन परिहृतमित्य-नुसंधेयम्।

अथौजः।

ओजः समासभूयस्त्वम्।

यथा—

आम्नायान्त सुगन्धिपुष्प कलितप्रस्थान सत्सूत्रव
न्मालालंकृतवत्सदेशसुमनो वाक्यार्थभूषोज्ज्वला:।
संख्यावद् बहुमूल्य सत्कृतिशुभारम्भ प्रियंभावुका
वर्धन्ते भुवि शारदामठपते रास्थानविद्वत्सभा:॥

तथा—

आम्नायार्थविवेचनप्रवणसद्व्याख्यान वाग्वासना
लोभप्राप्त सुधीन्द्र बम्भरवचो झंकारनादोन्नता:।
संख्यावद्बहुमानराङ्कव मणी पीताम्बरालंकृता:
शोभन्ते भुवि शारदामठपते रास्थान विद्वत्सभा:॥

व्याख्या—आम्नायेति। प्रिया भवन्तीति प्रियंभावुका:। 'कर्तरि भुव: खिष्णुश्च् खुकञौ' इति खुकञ् प्रत्यय:। अत्राभिनव विद्यातीर्थपादानामास्थाने विदुषां बहुमूल्य सत्कार विशेषास्तेषां स्वामिना मौदार्यं प्रतिपादयन्ति। समासभूयस्त्वं स्पष्टम्।

अथ सुशब्दता।

सुपां तिङां च व्युत्पत्ति: सौशब्द्यं परिकीर्त्यते।

यथा—

काष्ठा मण्डल कूलमुद्रुजविधै रभ्रंलिहै: शास्त्रवि
द्वादै: पण्डितमानिदुर्मतकथां नामैकशेषां पुन:।
कुर्वन् वैदिकसम्प्रदाय मधुना मद्रंकरं वर्धयन्
शृङ्गेरी गुरुसंततौ विजयते तीर्थावतारो मृड:॥

व्याख्या—सुपां तिङांचेति। सुबन्त तिङन्तविशेषणाना-

मित्यर्थः। काष्ठेति। कूलमुद्रुजन्तीति कूलमुद्रुजाः। विधा यैस्तैः दिगन्तप्रसिद्धै रित्यर्थः। 'उदि कूले रुजिवहो' रिति खश् प्रत्ययः। अभ्रं लिहन्तीत्यभ्रलिहाः। 'वहाभ्रे लिह' इति खश् प्रत्ययः। अदादित्वाच्छपो लुक्। खशो ङित्वान्न गुणः। पण्डितमानी— 'आत्ममाने खश्च' इति खश्। चाण्णिनिः। पण्डितमात्मानं मन्यत इति पण्डितमानी। भद्रंकरः—'क्षेमप्रियमद्रेऽण् च' इत्यण् चात् खच्। भद्रंकरः भद्रकारः। विश्वहितं कुर्वन्निति हेतौ शतृ-प्रत्ययः। इत्थमत्र सौशब्द्यं नाम गुणः। अत्र सकलचेतश्चमत्का-रकारि विशिष्टपद प्रयोगेण चारुताहेतुत्वसम्भवादस्त्येवात्र स्वतन्त्र गुणत्वम्। च्युत संस्कार दोषाभावतया गुणत्वमिति नात्र वक्तव्यम्। अनभिहितगुणभावेन, अपशब्दाभावमात्रेण तद्दोष परिहार सम्भवात्।

अथ प्रेयः।

प्रेयः प्रियतराख्यानं चाटूक्तौ यद्विधीयते।

यथा—

पाण्डित्यं त्वयि पूज्यता त्वयि महापीठाधिपत्यं त्वयि
प्रावीण्यं त्वयि दक्षता त्वयि दया त्वय्याप्तभावस्त्वयि।
औदार्यं त्वयि सौम्यता त्वयि जगद्रक्षापरत्वं त्वयि
श्रीमत्तीर्थयतीन्द्र! पालय सदा काण्डत्रयप्रक्रियाम्॥

व्याख्या—चाटूक्तिः-प्रियोक्तिः, दक्षता सामर्थ्यं क्षिप्रकारिता, अत्र निष्ठुरोक्ति लक्षण परुषदोष प्रातिपक्ष्यं प्रेयोगुणस्य।

अथौर्जित्यम्।

और्जित्यं गाढबन्धत्वम्,

यथा—

प्रक्षिप्त प्रतिपक्षपक्ष कलुषप्रक्षालनादीक्षिते
प्रत्यक्षाक्षपदे दुरीक्षसरणौ क्षुब्धारिपक्षक्रमे ।
कक्षादक्ष विपक्षशिक्षण चणे प्रत्यक्षमीक्षामहे
विद्यातीर्थजगद्गुरावभिनवे सर्वज्ञतावैभवम् ॥

व्याख्या—गाढवन्धत्वमिति-विसन्धि वैलक्षण्येनेति भावः। प्रक्षिप्तेति-अक्षपदे न्यायशास्त्रकारे गौतमे। दुरीक्षसरणौ अभ्यास जनित लाघवातिशयेन दुःखबोध शास्त्रवाद परिपाटीके। कक्षा स्पर्धा। पूर्वपक्ष सिद्धान्तानामेकः पक्षश्च। अत्र कक्षा शब्दस्य पूर्वपक्ष इति कवेराशयः। एतत् शब्दचित्रस्यापि लक्ष्यं भवितु मर्हति। अत्र गाढवन्धत्वं स्पष्टमेव।

अथ समाधिः।

समाधिरन्यधर्माणां यदन्यत्राधिरोपणम्।

यथा—

पश्यन्ती वियदापगां तदुदितं कल्लोलहल्लीसकं
पृच्छन्ती कुशलं पितामहवधूकण्ठस्थमुक्तावलिम्।
कैलासाचल दुग्धसिन्धुसुषमां सम्मानयन्ती मुहुः
विद्यातीर्थजगद्गुरोरनुपमा कीर्तिर्वरीवृत्यते ॥

व्याख्या—अत्र कुशलप्रश्नादे श्चेतनधर्मस्याचेतनायां कीर्ता वधिरोपणात् समाधिर्गुणः। तथा—

विधुं हसन्ती विधियानहंसं
दयान्विता स्वागतमुच्चरन्ती।

शिवे शिवावासगिरौ चरन्ती
विभाति कीर्तिर्जगतीगुरोस्ते ॥

व्याख्या—विधुमिति । अत्र हसने हेतुः विधोः कलङ्कित्वम् । अत्रचेतनाचेतनविभागाभावेऽप्यन्यत्रान्यधर्मारोपसद्भावादिदमपि समाधिगुणस्योदाहरणम् ।

अथ विस्तरः ।
समर्थनप्रपञ्चोक्तिरुक्तस्यार्थस्य विस्तरः ।
यथा—
शृङ्गेरी विलसज्जगद्गुरुगुणान् स्तोतुं मुहुर्वीक्षितुं
श्रोतुं चाप्यनुमोदितुं त्रिभुवनेप्येको ह्यनन्तः कृती ।
यज्जिह्वा द्विसहस्रमस्य विमला वीक्षाः सहस्रद्वयं
ता एव श्रुतयो भवन्ति महिता जाताः सहस्रं फणाः ॥

व्याख्या—समर्थनेति । विस्तर इति समर्थन प्रपंचनस्य शब्दात्मकत्वेन 'प्रथनेवावशब्दे' इति घञः प्रतिषेधे 'ऋदोरबि' त्यप्रत्ययः । स तु शब्दस्यविस्तर इत्यमरः । शृङ्गेरीति, स्तोत्रादिष्वनन्तस्य सामर्थ्यं समर्थयते । यदिति यस्मात्कारणदित्यर्थः । अत एवेदं न काव्यलिङ्गम् । हेतुवाचकविभक्त्यादेरश्रवणएव तस्योत्थानात् ।

अथ सम्मितत्वम् ।
यावदर्थपदत्वंतु सम्मितत्वमुदाहृतम् ।
यथा—

श्रीशारदासठेशान कीर्तिचन्दनलेपनम्।
दिशायोपा वितन्वन्ति ताटङ्कीकृततद्गुणाः ॥

व्याख्या—यावदिति। यावन्तोऽर्थाः यावदर्थमिति तद्धितान्तेन विग्रहः। 'यावदवधारणे' इत्यव्ययीभावः। यावदर्थं पदानि यस्य तस्य भावः तत्वम्। अभिधेयापेक्षया यत्रैकमपि पदं न न्यूनं, नाप्यधिकं तत्सस्मितमित्यर्थः। न्यूनाधिकपददोषाभावतयात्र गुणत्वम्। अत्र ताटंक इत्यनेन वज्रताटंका गृह्यन्ते।

अथ गाम्भीर्यम्।
ध्वनिमत्ता तु गाम्भीर्यम्।
यथा—
स्वर्गापगासमज्ञायामाशावासो जिते विधुः।
मुखे सर्वज्ञता शास्त्रे सर्वज्ञस्य गुरोश्च ते ॥

अत्र शंभोः शिरसि गङ्गा कटिस्थले दिग्वस्त्रं शेखरे चन्द्रः। नाम्नि सर्वज्ञ इति ध्वन्यते।

अथ संक्षेपः।
संक्षिप्तार्थाभिधानं यत् तत् संक्षेपः प्रकीर्त्यते।
शृङ्गाद्रि दक्षिणाम्नाय मठेशा बहवः स्मृताः।
तेषां भाग्यसमूहोऽयं विद्यातीर्थो जगद्गुरुः ॥

व्याख्या—शृङ्गाद्रीति। अत्र विस्तृतशब्दकथनयोग्यार्थस्य चरित्रस्य संक्षेपोक्तेः संक्षेपः।

अथ सौक्ष्म्यम्।

अन्तस्संजल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते।

यथा—

प्रण्युप परि सम्पूर्वा णुद दिश मृष रक्ष धातवःख्याताः।
अभिनव विद्यातीर्थे कर्तर्यर्थे सदान्यत्र कर्मणि॥

अत्र प्रणिनुदति, उपदिशति, परिमृषति, संरक्षतीत्यन्तः संजल्प रूपत्वात् सौक्ष्म्यम्।

व्याख्या—समीचीनो जल्पःसंजल्पः। विवक्षितार्थः। अन्तःकृतो गर्भितो यत्र तद्रूपत्वमन्तस्संजल्परूपत्वं सौक्ष्म्य मित्यर्थः। प्रण्युप परि समित्युपसर्ग पूर्वा णुद प्रेरणे, दिश अतिसर्जने (अति सर्जनं दानम) मृष तितिक्षायां, रक्ष पालने इत्येते धातवः अभिनव विद्यातीर्थे सदा कर्तरि वर्तन्ते। कर्तृवाचिन एव तिङादि प्रत्ययान् दधतीत्यर्थः। अन्यत्र कर्मणि कर्मवाचिनो यगादिप्रत्ययान् दधतीत्यर्थः। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति प्रत्ययाना मेव कर्तृकर्माभिमर्शनदर्शनात् न केवला प्रकृतिः प्रयोक्तव्येति नियमेन केवल धातोः प्रयोगाभावः।

अथ प्रौढिः।

प्रौढिरुक्तेः परीपाक इति काव्यविदो विदुः।

यथा—

व्यासादेः पुनरुद्भवः प्रतिनिधिः श्रीश्रीशुकब्रह्मणो
गौडर्षेः प्रतिबिम्बनं द्विरभिधा गोविन्दविद्यागुरोः।
वीप्सा शङ्करदेशिकेन्द्रयतिराड्राजस्य जन्मान्तरं
भारत्या इति तर्कयन्ति कवयः शृङ्गाद्रि पीठाधिपम्॥

व्याख्या—प्रौढिरिति। परीपाको वैचित्रीविशेषः। व्यासादेरिति। प्रति बिम्बनं प्रतिबिम्बः। द्विरभिधा द्विरुक्तिः। वीप्सा द्विर्भावः। निमित्तनैमित्तकयोरभेदोपचारः। अत्र सर्वत्र द्वितीयव्यासादिरूपत्वमित्यर्थः। अत्र श्रृङ्गाद्रि पीठाधीश्वरे व्यासपुनरुद्भवाद्यारोपलक्षण वैचित्रीवशात् प्रौढिर्नाम गुणः।

अथोक्तिः—

विदग्धफणितिर्या स्यादुक्तिं तां कवयो विदुः।

यथा—

दृष्टा पद्मासक्तिर्द्विजराजस्य तव विचित्रचरितस्य।
भास्वानपि त्वं तां च कुवलयलक्ष्मीं विभूषयसि॥

व्याख्या—दृष्टेति। पद्मासक्तिः-एकत्र पद्मायां (मोक्षलक्ष्म्याम्) अन्यत्र पद्मेषु, द्विजराजः-एकत्र चन्द्रः। अन्यत्र द्विजगुरुः। द्विजश्चासौ गुरुश्चेति कर्मधारयः। कुवलयलक्ष्मीं भूमण्डललक्ष्मीं अन्यत्र उत्पलसम्पदम्। अत्र द्विजराजस्य चन्द्रस्यापि पद्मासक्तिः भास्वतः सूर्यस्यापि कुवलयलक्ष्मीविभूषणमित्येवंरूपमश्लीलं विदग्धफणितौ श्लेषभङ्ग्या परिहृतम्।

अथ रीतिः—

यथोपक्रमनिर्वाहो रीतिरित्यभिधीयते।

यथा—

षण्मतानीक्षते स्वामी षट्शास्त्राण्यवबुद्ध्यते।
षट् शमादीनुपादत्ते षड्वैरीनपि नह्यते॥

व्याख्या—षण्मतानि-शैव वैष्णव शाक्त गाणपत सौर कापालिकाख्यानि। षट् शास्त्राणि श्लो।। कपिलस्य कणादस्य गौतमस्य पतञ्जलेः। व्यासस्य जैमिनेश्चापि शास्त्राण्याहुः षडेव हि। शमादयः—शमदमोपरति तितिक्षा समाधान श्रद्धा इति। णह बन्धने, उभयपदी, अत्र पादचतुष्टयेऽप्यादौ षट्पदोपादानात् यथाक्रमनिर्वाहेण पतत्प्रकर्षदोषपरिहारकतया गुणत्वम्।

अथ भाविकम्—

भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतम्।

यथा—

स्वामिंस्तात! यतीशान! नव्यतीर्थ! जगद्गुरो।
छात्रिणां भारमेषोऽहं छात्रेण प्रापितस्त्वया।।

अत्र प्रेमरूपभाववशात् स्वामिंस्तातेति वाक्यवृत्तिः।

व्याख्या—स्वामिन्निति। शिष्यं भारतीतीर्थं प्रति गुरोरुक्तिः।

अथ गतिः।

गतिर्नाम सुरम्यत्वं स्वरारोहावरोहयोः।।

यथा—

मार्ताण्डोग्रमयूखडम्बरनिभैर्निस्सीम तेजोंऽशुभिः
विद्यातीर्थजगद्गुरोस्त्रिभुवने प्रद्योतिताशांतरे।
कृत्स्नं संतमसं शुशुज्ज्वल शुचिज्वालावलीसंस्तवे
ष्वात्मन्येव विजृम्भते श्रुतिमतप्रद्वेषिणां संततम्।।

इति व्याकरणविद्याविशारद, शतावधानि, अभिनव

विद्यानाथ पिशुपाटि सुब्रह्मण्यशास्त्रिप्रणीते अभिनव विद्यातीर्थ यशोभूषणे गुणप्रकरणम्।

व्याख्या—शुक् शोकः। शुचिः अग्निः। संस्तवः परिचयः। आत्मा मनः। निःसीमतेज इति सूर्यादितेजोव्यतिरेकोक्तिः। जगद्गुरु तेजसि विश्वव्यापिनि सति संतमसस्य श्रुतिद्वेषि मनस्येवावकाश इत्याह-कृत्स्नमिति। तत्राग्निसंनिधानेऽपि संतमसस्य न बाध इत्याह-शुगिति। संस्तवेऽपीत्यपिशब्दो विरोधसूचकः। द्वेषिणः दुःखिता मुह्यन्तीति परिहारः। 'विष्वक् संतमस' मित्यमरः। अत्र पूर्वार्धे दीर्घाक्षरप्रायत्वात् स्वराणामारोहः। उत्तरार्धे ह्रस्वाक्षरप्रायत्वादवरोहः। गुणानामर्थगतत्वमपि केचिदिच्छन्ति। प्राचीनानामाचार्याणां मतं गुणानां संघटनाश्रयत्वमेव, अलङ्कार सर्वस्व कारादयः संघटना धर्मत्वेन शब्दार्थ धर्मत्वेन च गुणालङ्काराणां व्यवस्थानमित्याहुः। अतः गुणानां संघटनाश्रयत्वमेव युक्त मिति प्रवीणाः।

इति भारद्वाज सगोत्राभ्यां श्रीमदनसूयादेवीसुब्रह्मण्यशास्त्रि सूनुभ्यां विश्वजनीनविद्याभ्यां (विद्या भाषाप्रवीणोपाधिभ्यां) सीतारामशास्त्रि ज्ञानानन्दशर्मभ्यां विरचिते अभिनव विद्यातीर्थयशोभूषणव्याख्याने प्रकाशाख्याने गुणप्रकरणं समाप्तम्।

---

# अभिनवविद्यातीर्थयशोभूषणम् ।

## अथ अलङ्कारप्रकरणम् ।

अथ गुणनिरूपणानन्तरमलङ्कारा निरूप्यन्ते। अलं क्रियतेऽनेनेति चारुत्वहेतुरलङ्कारः। आश्रयाश्रयिभावेनालङ्कार्यालङ्कारभावो लोकवत् काव्येऽपि संमतः। चारुत्वहेतुत्वेऽपि गुणानामलङ्काराणां चाश्रयभेदाद्भेदव्यपदेशः। संघटनाश्रया गुणाः। शब्दार्थाश्रयास्त्वलङ्काराः।

शब्दार्थयोर्मध्ये शब्दस्यार्थं प्रत्यन्तरङ्गत्वात् प्रथमं शब्दालङ्कारा निरूप्यन्ते।

अथ छेकानुप्रासः।

भवेदव्यवधानेन द्वयो र्व्यञ्जनयुग्मयोः।
आवृत्तिर्यत्र स बुधैः छेकानुप्रास इष्यते॥

यथा—

वदावदो महास्वामी वेदवेदशिरश्शिरः।
महोमहोदया मास्ते कुर्वन् गुरुपरम्पराम॥

व्याख्या—भवेदिति। रसाद्यनुगतः प्रकृष्टो न्यासः अनुप्रासः। स च छेक वृत्त्युपाधिगतो द्विविधः। उदाहरति-वदावदेति, वदावदो वक्ता। शिरश्शिरः। अत्र द्वितीय शिरः शब्दः प्रधानार्थकः। मह उत्सवः। महोभिर्महोदयः यस्या इति विग्रहः। अत्र पादत्रयेऽपि व्यञ्जनयुग्माना मव्यवधानेनावृत्तेः छेकानुप्रासः।

अथ वृत्त्यनुप्रासः ।

एक द्विप्रभृतीनां तु व्यञ्जनानां यथा भवेत् ।
पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते ॥

यथा—

रे रे कल्पितदुर्मताः क्षणमितः शृङ्गाद्रि पीठप्रभोः
प्रख्यातां महितां प्रतारणमतप्रध्वंसने दीक्षिताम् ।
वीक्षध्वं पृतनां सुधीन्द्रसुभटां तर्कास्त्रशस्त्रावृतां
भीता वीतमताः कृताञ्जलिपुटा याताः पुरा त्वादृशाः ॥

व्याख्या—इदं शारदामठ भृत्यानां वाक्यम् । प्रतारणं वंचना, पृतना सेना, अत्रासकृत्तकारावृत्त्या वृत्त्यनुप्रासः । अन्ये भेदाः सूर्यशतकादौ द्रष्टव्याः ।

अथ यमकम् ।

यमकं पौनरुक्त्ये तु स्वरव्यञ्जनयुग्मयोः ।

यमके स्वरयो र्व्यञ्जनयुग्मयोरावृत्तिः । छेकानुप्रासे वृत्त्यनुप्रासे च स्वरपौनरुक्त्यमानुषङ्गिकम् ।

यथा—

तपस्तेजोगुरोरस्य महामहिम वर्चसः ।
धत्ते शोभां सरोजेष्टमहामहिमवर्चसः ॥

व्याख्या—स्वरव्यञ्जनयोरित्यत्र स्वरसहितव्यञ्जनेति मध्यमपदलोपी समासः । उदाहरति तपस्तेज इति । महान् महिमा आधिक्यं यस्य वर्चसः । तन्महामहिम । तादृशं वर्चः यस्य तस्य गुरो स्तपस्तेजः । सरोजेष्टमहां सारसप्रियोत्सवाम् ।

अहिमवर्चसः सूर्यस्य शोभां धत्ते। अत्र द्वितीयपादस्य चतुर्थपादे यमनात् संदष्टयमकं नाम यमकभेदः। महश्शब्दः अदन्तोऽपीति मुकुटः।

अथ पुनरुक्तवदाभासः।

यत्रार्थः प्रमुखे किंचिद्भासते पुनरुक्तवत्।
पुनरुक्तवदाभासोऽलङ्कारस्स सतां मतः॥

यथा—

जिष्णु रिन्द्रो यतीन्द्राणां द्विजराजः कलानिधिः।
हंसः सूर्यमहातेजा विद्यातीर्थो जगद्गुरुः॥

व्याख्या—जिष्णुरिति, जयशीलो जिष्णुः। यतींद्राणामिन्द्रः केन्द्रमठाधीश्वरः। द्विजराजः विप्रश्रेष्ठः। कलानिधिः विद्यानिधिः। हंसः यतिः। सूर्यमहातेजाः सूर्यतेज इव तपो जनिततेजाः। अत्र जिष्ण्वादीना मिन्द्रादिपर्यायपदप्रयोगेण प्रमुखे भासमानस्य पौनरुक्त्यस्य उक्त प्रकारेण अन्वयवेलाया मन्यथा पर्यवसानात् पुनरुक्तवदाभास इति भावः।

अथ लाटानुप्रासः।

शब्दार्थयोः पौनरुक्त्यं यत्र तात्पर्य भेदवत्।
स काव्यतात्पर्यविदां लाटानुप्रास इष्यते॥

यत्र शब्दार्थयोस्तात्पर्यभेदमात्रं न स्वरूपभेद स्तत्र लाटानुप्रासः।

यथा—

प्रज्ञा प्रज्ञा हि सा गण्या या तीर्थयतिमाश्रिता।
वादो वादो ह्ययं तस्य विद्या विद्या च कथ्यते॥

लाटजनोपलालितोऽनुप्रासः लाटानुप्रासः। न तु लाटदेश जन्य इति गोपालः। प्रज्ञेति। सा अभिनव विद्यातीर्थसम्बन्धिनी। अत्र द्वितीयप्रज्ञादिशब्दानामुत्कर्षलक्षणस्तात्पर्यभेदः।

इति शब्दालङ्काराः।

---

अथार्थालङ्कारा निरूप्यन्ते।

तत्र प्रथममनेकालङ्कारबीजभूतत्वादुपमालङ्कारो निरूप्यते।

साहश्यं सुन्दरं वाक्यार्थोपस्कारक मुपमालङ्कृतिः। सौन्दर्यं च चमत्कृत्याधायकत्वम्। चमत्कृतिरानन्दविशेषः। सहृदय हृदय प्रमाणकः।

उपमा द्विधा-पूर्णा लुप्ता चेति, उपमानोपमेय साधारणधर्म साहश्यप्रतिपादकानां चतुर्णां प्रयोगे पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता। पूर्णा द्विविधा श्रौती आर्थी चेति। साक्षात्साहश्य प्रतिपादकयथेवादिशब्दानां प्रयोगे श्रौती। धर्मिव्यवधानेन साहश्यप्रतिपादकानां सदृशसंकाशनीकाशप्रतीकाशादिशब्दानां प्रयोगे आर्थी। द्वेऽपि वाक्यसमासतद्धितगतत्वेन त्रिविधे। एवं पूर्णोपमा षट्प्रकारा, लुप्तोपमा एकोनविंशतिभेदा।

अथोदाहरणानि—

वाक्यगा पूर्णा श्रौती यथा—

विख्याते कपिले यथा कृतयुगे सांख्यप्रबोधोदये
दत्तात्रेययतौ यथा हि महिते त्रेतायुगे विश्रुते।

वेदव्यासमुनौ प्रभावकलिते ख्याते यथा द्वापरे
विद्यातीर्थगुरौ कलावभिनवे विद्या तथा भ्राजते।
अत्र यथाशब्दप्रयोगादियं वाक्यगा श्रौती च।
समासगा पूर्णा श्रौती यथा—
अर्यमेवोदयाद्रिस्थो गुरुः सिंहासनस्थितः।
पश्यतां हन्ति नेत्राब्जजाड्यं शृङ्गाद्रिवासिनाम्॥
अत्र अर्यमेवेत्यत्र इवेन सह नित्यसमासः।

व्याख्या—अर्यमेवेति, अर्यमा सूर्यः। कथमियमुपमा समासगतेत्याकाँक्षायामाह-इवेन सह नित्यसमास इति। "इवेन समासो विभक्त्यलोपश्च।' 'पूर्वपद प्रकृतिस्वरत्वं च" इति वार्तिकादिति शेषः।

तद्धितगा पूर्णा श्रौती यथा—
कपिलाचार्यवद्दत्तयोगिवद्व्यासवच्छङ्करार्यवत्।
अभिनव विद्यातीर्थे गुरावध्यात्मविद्याद्य शोभते॥

व्याख्या—कपिलेति, अत्र 'तत्र तस्ये' वेति सप्तमीसमर्थादिवार्थे वति प्रत्ययः। अत एवेयं तद्धितगा श्रौती।

वाक्यगा पूर्णा आर्थी यथा—
तैस्तैर्मताभास निरासनाद्यैः तैस्तैःप्रबोधैश्श्रुतिसम्मतैश्च।
श्रीशङ्कराचार्य गुरोस्समानो विभाति शृङ्गाद्रिमठेश्वरोऽयम्॥
अत्र गुरोःसमान इति समानशब्दोपादानात् आर्थीयमुपमा वाक्यगा।

व्याख्या—तैस्तैरिति, वेदवाह्य चार्वाकादिमताभासनिराकरणपूर्वकै रध्यात्मविद्याप्रवोधैरित्यर्थः। अत्र गुरोस्समान इति साम्य विशिष्ट समानपदन्यासेनार्थीयमुपमा वाक्यगता च।

समासगा पूर्णार्थी यथा—

ताद्दक् प्रबोधसम्पत्त्या दक्षिणाम्नायपीठपः।
शुकशङ्करसंकाशो दत्तेऽद्वैतमतामृतम्॥

व्याख्या—ताद्दगिति, शुकशंकराभ्यां सद्दशः शुकशंकर संकाश इति नित्यसमासः। 'स्युरुत्तरपदे त्वमी निभसंकाशनीकाश प्रतीकाशोपमादयः।' इत्यमरकारः। अत एवेयं समासगा आर्थी। अत्र शुकशंकरसंकाश इति समासे संकाशशब्दोपादानादार्थीयं समासगा।

तद्धितगा पूर्णार्थी यथा—

स्वर्णाहार्यवदौन्नत्ये गाम्भीर्ये दुग्धसिंधुवत्।
पाण्डित्ये गुरुवद्भाति विद्यातीर्थो जगद्गुरुः॥

व्याख्या—स्वर्णेति। अहार्यः पर्वतः। औन्नत्यादौ स्वर्णाहार्यतुल्यं भातीत्यर्थः 'तेन तुल्यं क्रियाचेद्वति' रिति विहितस्य वतेः प्रयोगादार्थीयमुपमा तद्धितगा।

एषूदाहरणेषुपमानोपमेय साधारणधर्म साद्दश्य प्रतिपादकानि चत्वारि निबद्धानि। अतः पूर्णत्वम्।

अथ लुप्तोपमा—

अनुक्तधर्मा वाक्यगा श्रौती लुप्ता यथा—

यथा पुष्परसे भृङ्गी यथा भास्वति पद्मिनी।
यथा कुमुद्वती चन्द्रे तथा तीर्थे प्रजा नवे॥

अत्र रज्यतीति शेषः। अत्र रागस्य समानधर्मस्यानुपादानादिय मनुक्तधर्मा।

अनुक्तधर्मा समासगा श्रौती लुप्ता यथा—
नव्यतीर्थयतीन्द्रस्य पादपीठी महर्निशम्।
पूजयन्ति महाराजाः प्रयता देवतामिव॥

अत्र पादपीठीदेवतयोः वाञ्छितार्थप्रदत्वरूपस्समानधर्मो नोक्तः। सादृश्यार्थे विहितस्य वतेःप्रयोगे धर्मोपादान एवान्वयसौकर्या दनुक्तधर्मा तद्धितगा श्रौती लुप्ता नास्ति।

अनुक्तधर्मा वाक्यगा आर्थी लुप्ता यथा—
भारतीतीर्थशिष्यस्य जैत्रयात्राजयध्वनिम्।
समानं सिंह निस्वानैः शृण्वन्ति प्रतिवादिनः॥

अत्र जयध्वनेस्सिंहध्वनिसाम्याद्भीषणत्वं गम्यते। स च नोक्तः। अतः अनुक्तधर्मा वाक्यगा आर्थी लुप्ता।

व्याख्या—भारतीति, भारतीतीर्थः शिष्यः यस्य सः। भारतीतीर्थ इति शिष्य इति वा विग्रहः। भारतीतीर्थस्वामिनः शृङ्गगिरिकेन्द्रमठे उत्तराधिकारिणः।

अनुक्तधर्मा समासगा आर्थी लुप्ता यथा—
मुहुर्मुहुः शृङ्गगिरिज्ञ गोष्ठीं लोकेशगोष्ठीसदृशी मवेक्ष्य।
शृङ्गाद्रिभूमौ श्रुतिशीर्षवाणी केन्द्रप्रतिष्ठां मुनयःस्तुवन्ति॥

व्याख्या—मुहुरिति। ज्ञगोष्ठी पण्डितगोष्ठी। लोकेशगोष्ठी ब्रह्मसभा। अध्यात्मविद्याविचारः समानधर्मः। स तु नोक्तः। गोष्ठीसदृशीमिति समासः।

अनुक्तधर्मा तद्धितगा आर्थी लुप्ता यथा—

विद्यातीर्थं गुरोरस्य महामहिमवर्चसः।
लोकेशकल्पमाकारं पश्यन्ति यतिपुंगवाः॥

व्याख्या—पुमांश्चासौ गौश्च 'गोरतद्धित लु कि' इति टच्। पुंगवः श्रेष्ठः। 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुँजराः। सिंह शार्दूल नागाद्याः पुंसि श्रेष्ठार्थवाचकाः।' इत्यमरः। अत्र लोकेशकल्पं ब्रह्म सदृश मित्यनेन अभिनवविद्यातीर्थस्य गुरोराकारस्य लोकोत्तरत्वं गम्यते। लोकेशकल्पं लोकेशसदृशं। तेजस्सम्पदेति शेषः। ईषद्समाप्तौ कल्पप्प्रत्ययः तेजस्वित्वं समानधर्मः। स तु नोक्तः। इयमेकलोपे लुप्ता। एषूदाहरणेषु धर्मस्यानुपादानम्।

अनुक्तधर्मेवादिः कर्मक्यचा लुप्ता यथा—

हंसीयत्यण्डजस्तोमं कुन्दीयति सुमव्रजम्।
विद्यातीर्थस्य नव्यस्य कीर्तिवैशद्यवैभवम्॥

व्याख्या—हंसीयतीति। अत्र 'उपमानादाचारे' इति क्यच् प्रत्ययः। 'क्यचि' चेतीकारः। धावल्यमत्र साधर्म्यं गम्यते। अण्डजस्तोमं हंस इवाचरतीत्यत्र वाक्ये प्रक्रान्तं कर्मद्वयम। तत्र उपमानकर्मणः अन्तर्भूतत्वादसावकर्मको धातुः। 'धातो रर्थान्तरे वृत्तेः धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया।' इति कर्मान्तरापेक्षया तु सकर्मक एव। एवमन्यत्रापि द्रष्टव्यम्।

अनुक्तधर्मेवादि राधारक्यचा लुप्तो यथा—

प्रासादीयति कुट्यां सः प्रासादे च कुटीयति।
यः शारदामठाध्यक्षः पञ्चत्रिंश जगद्गुरुः॥

व्याख्या—प्रासाद इवाचरतीत्यत्र महास्वामिनां द्वन्द्वजयस्सूच्यते। 'अधिकरणाच्चेति वक्तव्य' मिति वार्तिकात् क्यच् प्रत्ययः।

अनुक्त धर्मेवादिः कर्म णमुला लुप्ता यथा—
भजन्ती कैलासं प्रियमुकुरभाजं प्रविमलां
सखीभाजं गङ्गां प्रियतनयभाजं शशधरम्।
पयः पारावारं स्वगृह जनताभाज मवनौ
जगद्व्याप्ता कीर्तिर्मठपतिपतेस्ते क्षितिपतेः॥

व्याख्या—भजन्तीति। कैलासं प्रियमुकुरमिव भजित्वा प्रियमुकुर भाजम्। एवमुत्तरत्रापि द्रष्टव्यम्। 'उपमाने कर्मणि च' इति णमुल् प्रत्यये कषादित्वात्सर्वत्र भजन्तीत्यनुप्रयोगः। अत्र प्रियमुकुरसख्यादीनां कैलासगङ्गा मुख्यानां चोपमानोपमेयभावे नैर्मल्य मेव साधर्म्यमूलमिति गम्यते।

अनुक्त धर्मेवादिः कर्तृ णमुला लुप्ता यथा—
दुष्टेषु शिक्षास्मृतिदण्डचारं शिष्टेषु वेदान्त विचार चारम्।
प्रजासु वर्णाश्रमधर्मचारं चरत्ययं तीर्थयतीन्द्र वादः॥

व्याख्या—शिक्षास्मृतेः दण्डः शिक्षास्मृतिदण्डः इति तादर्थ्ये अश्वघासादिवत् षष्ठी समासः। स इव चरित्वा तच्चारमिति 'उपमाने कर्मणि च' इति चकारात्कर्तरि णमुल्। कषादित्वाच्चरतेरनुप्रयोगः। अत्र भीषणत्व ज्ञाननियतीनां क्रमेण समानधर्मत्वमुन्नेयम।

अनुक्तधर्मेवादिः क्विपा लुप्ता यथा—
ज्योत्स्नापूरति विज्ञाना मज्ञानामन्धकारति।
श्रृङ्गशैल मठेन्द्रीयसभा वाक्यार्थजृम्भितम॥

व्याख्या—सभावाक्यार्थजृम्भितं कर्तृ। ज्योत्स्नापूर इव आचरति ज्योत्स्नापूरति। तद्वत् श्लाध्यमित्यर्थः। अंधकार इवाचरति अंधकारति। तद्वद्दुर्ज्ञेयमित्यर्थः। 'सर्वप्रातिपदिकेभ्यः क्विब्वाचारे' इति क्विप्। एषूदाहरणेषु द्वयोरनुपादानम्।

अण्डजस्तोमं हंसीयतीत्यत्र कर्मक्यचि हंसानिव करोतीति, कुट्यां प्रासादीयतीत्यत्र आधारक्यचि प्रासाद इव वर्तत इति, शिक्षा स्मृतिदण्डचारं चरतीति कर्तृणमुलि शिक्षास्मृतिदण्ड इव चरतीति इवशब्दोऽन्तर्गत इति तस्य लुप्तत्वम्।

अनुक्तधर्मेवादिः कर्तृक्यचा लुप्ता यथा—
भाषीयन्ति सुधीयन्ति भूषणीयन्ति सर्वतः।
अस्याभिनवतीर्थस्य गुरोर्विद्याविभूतयः॥

व्याख्या—अत्र विद्यास्वरूप मुपमेयं, तदनुपात्तम। भाषामिवात्मानमाचरन्तीत्यत्रात्मनः उपमेयस्य, इवादेः, साधर्म्यस्य प्रौढत्वादेश्च अनुपादानात् उपमेय साधर्म्येवादिलुप्ता। आचार साधर्म्यवादिनां तु द्विलोप एव।

अनुक्तधर्मेवादिः कर्तृक्यङा लुप्ता यथा—
चतुर्मुखायते गोष्ठ्यां पारिजातायतेऽर्थिनाम।
वाणी जगद्गुरोरस्य विदुषाममृतायते॥

व्याख्या—चतुर्मुखायत इति। चतुर्मुख इवाचरतीति चतुर्मुखायते। "कर्तुः क्यङ् सलोपश्च" इति क्यङ् प्रत्यये ङित्वादात्मने-

पदम्। अत्रोपमानकर्तुरन्तर्भूतत्वादुपमेयकर्त्रा सकर्मकत्वमिति भाष्यकारः।

अनुक्तोपमाना वाक्यगा लुप्ता यथा—
न चान्यो दातास्ते जगति सदृशस्तीर्थयतिना
गुणश्रेणीशंसा भरितहरिदन्ताच्छयशसा।
यदीया विद्वांसो धनजनमणी हर्म्ये विभवाः
क्रियन्ते मृष्टान्नप्रमदकलिता नित्यमितरे॥

व्याख्या—अत्र 'नचान्यो दातास्ते' इत्यादिना जगद्गुरुणा सदृशो नास्तीति कथनेनात्रानुक्तोपमाना वाक्यगा लुप्ता—

अनुक्तोपमाना समासगा लुप्ता यथा—
विद्यातीर्थसमो बोद्धा नभूतो न भविष्यति।
यस्य वेदान्तबोधेन धरा ब्रह्मसभीकृता॥

व्याख्या—विद्यातीर्थेति। विद्यातीर्थसम इति समासेन उपमेयवाचकयोः प्रयोगः। बोधनाद् बोद्धेति साधर्म्यकथनम्। तथा चात्रानुक्तोपमाना समासगा लुप्ता।

अनुक्तधर्मोपमाना वाक्यगा लुप्ता यथा—
सममभिनव विद्यातीर्थहंसस्य कीर्त्या
क्वचिदपि न हि किंचित् कौमुदीश्वेतकान्त्या।
यदतिमधुरभाव क्षालिताशेषकण्ठ
स्थितविषमृडमार्या गाढमालिङ्गतिस्म॥

व्याख्या—हंसः यतिः। अत्र नव विद्यातीर्थस्वामिनां कीर्त्या सदृशं मधुरं वस्तु किमपि नास्ति। अतः साधर्म्योपमानयोरनुपादानादियमनुक्तधर्मोपमाना वाक्यगा लुप्ता। पूर्वोदाहरणद्वये नचान्यो दातेति विद्यातीर्थसमो बोद्धेति शब्दद्वयेन वितरणशीलत्व वोधृत्वरूप साधारण धर्मः उक्तः। अनन्तरोदाहरणद्वये धर्मस्यापि नोपादानमिति विशेषः।

अनुक्तधर्मोपमाना समासगा लुप्ता यथा—

तपस्तेजस्तुल्यं मठपतिपतेरस्य जयिनो
नभूतं नो भावि क्वचिदपि जगत्यां न च भवत्।
यथा लोकालोक स्थितभृगुषु भानूपलचया
विराजन्ते रात्रिंदिवमुदितरोचिः परिचयाः॥

व्याख्या—तपस्तेज इति। भृगुषु तटेषु 'प्रपातस्तु तटो भृगुः' इत्यमरः। 'अचतुर विचतुर' इति सूत्रे रात्रिंदिव शब्दो निपातितः। लोकालोक स्थितभृगुषु-पश्चिमदिक्स्थतेष्वपीति भावः। देशतः कालतश्च परिच्छेदातीतत्वात् तपस्तेजस्तुल्यं नास्तीत्यादिना उपमानसमानधर्मयोरनुपादानात्, तपस्तेजस्तुल्यमिति वाचकस्य समास घटकत्वाच्चात्रानुक्तधर्मोपमाना समासगता लुप्ता।

अनुक्तधर्मेवादिः समासगा लुप्ता यथा—

शिष्टात्मनां सुधासेव्यं दुष्टानां गरलासहम।
विद्यातीर्थस्य नव्यस्य वर्तनं विश्वभावुकम॥

व्याख्या—शिष्टेति। अत्र "उपमानानि सामान्यवचनैः"

रिति सूत्रेण समासे इवशब्दलोपः। एवं स्थिते सर्वस्यापि शब्दस्य शब्दान्तरसम्बन्धेन विशेषवाचकत्वात् प्रकृते 'सेव्य, असह' इति शब्दयोर्विशेषवाचकतया सामान्यवाचकत्वाभावेऽपि भाष्योक्तरीत्या समासात्पूर्वं सामान्य वचनत्वेन समासः समर्थनीय;। अतोऽत्रानुक्त धर्मेवादिस्समासगा लुप्ता

अनुक्तधर्मेवाद्युपमाना समासगा लुप्ता यथा—
मठभक्ता महाराजाः श्रीमद्रामपराक्रमाः।
ते किन्त्वत्रा खरास्सर्वे येषां प्रत्यर्थिपार्थिवाः॥

व्याख्या—मठेति। रामपराक्रम इव दुःसहः पराक्रमः येषां ते रामपराक्रमाः। अत्र विशेषमाह-किंत्विति। खरः रावण-सेनायां कश्चन प्रमुखः। तत्सहिताः श्रीरामप्रत्यर्थिनः। महाराज-वैरिणस्तु तद्रहिता इति प्रातीतिकोऽर्थः। खराः तीक्ष्णाः। ते नभवन्तीत्यखराः। सर्वेऽपि सुसाधा इत्यर्थः। अत्र रामस्य पराक्रम इव पराक्रमः येषामिति विग्रहे धर्मेवादेः गम्यमानार्थत्वात् लुप्तत्वम्। उपमानस्य तु 'सप्तम्युपमानपूर्वपदस्य वहुव्रीहिर्वाच्चोत्तर पदलोपः' इति वार्तिकाल्लोप इति इयं धर्मेवाद्युपमान लुप्ता। इति लुप्तोपमाः दर्शिताः।

अथ साधारण धर्मोपादाने द्वैविध्यम्। धर्मस्य सकृदुपमा-नोपमेय गतत्वेन निर्देशः। उभयगतत्वेन पृथगुपादानं च। पृथगु-पादानं च वस्तु प्रतिवस्तुभावेन, बिम्बप्रतिबिम्बभावेन च द्विविधम्। एकस्यार्थस्य शब्दद्वयेनाभिधानं वस्तुप्रतिवस्तुभावः। द्वयोरर्थयोर्द्वि-रुपादानं बिम्बप्रतिबिम्बभावः।

सकृन्निर्देशो यथा—

मठपा नतमूर्धानः सेवन्तेऽत्र जगद्गुरुम्।
शासितार मसाधूनां सार्वभौमं यथा नृपाः।

व्याख्या—अत्र मठपानां नृपाणां च नतमूर्धान इति सकृदेव साधर्म्य मुक्तम्। तथा शासितार मसाधूनामिति जगद्गुरोः सार्व भौमस्य च सामान्यधर्मता सकृदेवोक्ता।

वस्तुप्रतिवस्तु भावेन द्विधा निर्देशो यथा—

जगद्गुरुकुलं नूत्न विद्यातीर्थेन भूपितम्।
वंशः परमहंसानां शङ्करेण परिष्कृतः॥

अत्र भूपित परिष्कृत शब्दाभ्यामेकार्थप्रतीतेः वस्तुप्रतिवस्तु-भावः।

व्याख्या—परिष्कृत इत्यत्र 'संपरिभ्यां करोतौ भूषणे' इति सुडागमे षत्वम्।

बिम्बप्रतिबिम्ब भावो यथा—

लसत्सितातपत्रश्रीः शृङ्गाचलमठेश्वरः।
रत्नसानुरिवाभाति कूटलग्नेन्दुमण्डलः॥

सितातपत्र चन्द्रमण्डलयोः सादृश्येन शृङ्गाचल मठाधीश सुवर्णाचलयोः सादृश्यमिति विम्बप्रतिबिम्ब भावः।

व्याख्या—लसत्सितातपत्रेति। अत्र सितातपत्रस्य इन्दु-मण्डलं प्रतिबिम्बतया निर्दिश्यते। मठेश्वर सुवर्णाचलयोः स्वरूपतः सादृश्याभावात् विशेषण सादृश्यनिबन्धनं विशेष्यसादृश्यमिति

वक्तव्यम्। स एव बिम्बप्रतिबिम्बभाव इत्याहात्रेति। वस्तुतः भिन्नयोरपि उपमानोपमेय धर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्ब भाव इत्यालंकारिक समयः।

अपरमपि द्वैविध्य मस्यालङ्कारस्य—समस्तवस्तु विषया एकदेश विवर्तिनी चेति।

समस्तवस्तु विषया यथा—
शृङ्गेरी भाति काशीव तुङ्गा गङ्गेव राजते।
शारदास्तेऽन्नपूर्णेव तीर्थः शम्भुरिवार्ध्यते॥

व्याख्या—शृङ्गेरीति। समस्त वस्तूति=अवयव्यवयवाश्च विषयाः यस्यास्सा समस्त वस्तु विषया। 'ऋधु वृद्धौ' इति धातोर्ध्यतीति। अनेकोपमेयमिति केचित्। इवशब्दान्तर प्रयोगे पौनरुक्त्यापत्तेः एकेनैवाल मिति विद्याधरः।

एकदेश विर्तिनी यथा—
वेदान्तविद्भिस्सनकादिभिर्वा यतीश्वरैर्ब्रह्मऋषीश्वरैर्वा।
प्राज्ञैरशेषज्ञ सुरर्षिभिर्वा सभा विभात्यत्र जगद्गुरूणाम्॥
अत्र जगद्गुरुसभा ब्रह्मसभेवेत्यर्थात् प्रतीतेः एकदेशवर्तित्वम्।

व्याख्या—वेदान्तेति। अत्र सर्वत्र वाशब्द इवार्थे। 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति विश्वः।

मालाकारेणाप्युपमालङ्कारो दृश्यते। यथा—
शेषति जीवति गणपति भाषाति द्रुहिणति हयमुखति कलौ।
अभिनव विद्यातीर्थः प्रतिभायुत विद्यावाद कौशलः॥

अत्रैकस्योपमेयस्यानेकोपमानदर्शनात् मालात्वम्।

व्याख्या—शेषतीति। सर्वत्राचारे क्विप् प्रत्ययः॥

सामर्थ्यं त्रिविधम्। भेदप्रधानं, अभेदप्रधानं, भेदाभेदप्रधानं चेति, तत्राद्यं व्यतिरेकादौ। द्वितीयं रूपकादौ। तृतीयमत्रैव।

अथानन्वयः।

एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः।

तत्रैकस्यैव वस्तुनःउपमानोपमेयत्व वर्णनं तत्रानन्वयालङ्कारः।

यथा—

सन्तु भूमौ मताचार्या द्वैताद्वैताश्च वैष्णवाः।

तथापि नव्यतीर्थोऽयं नव्यतीर्थ इव स्वयम॥

व्याख्या—एकस्येति। एकस्यैवोपमानोपमेयभावानन्वयादन्वर्थेय मनन्वयसंज्ञा, सन्त्विति, तीर्थः=गुरुः। अस्य द्वितीय सब्रह्मचारि निवृत्तिः फलम्।

अथोपमेयोपमालङ्कारः।

पर्यायेण द्वयोस्तस्मिन्नुपमेयोपमा मता।

तस्मिन्नित्युपमानोपमेयत्व परामर्शः। यथा—

लक्ष्मीर्वाणीव पूर्णश्रीः वाणी लक्ष्मीरिव स्थिता।

क्षमेव दक्षता शस्ता दक्षतेव क्षमा गुरौ॥

व्याख्या—पर्यायः=यौगपद्याभावः। द्वयोरुपमानोपमेययोः यौगपद्याभावेन उपमानोपमेयत्वे सति उपमेयोपमा। उपमेयेन उपमा-

उपमेयोपमाइत्यन्वर्था संज्ञा। अत्र तृतीय सदृश निवृत्ति रूपवस्तु प्रतीयते। पूर्णश्रीत्व शस्तत्वयोः साधारण धर्मत्वम्। अत्रानन्वय वैलक्षण्येन वाक्यभेदाश्रयोऽयमुपमेयोपमालङ्कारः। तच्छब्दस्य प्रकृतानन्वय परामर्शं वारयति तस्मिन्निति।

**अथ स्मरणालङ्कारः।**

सदृशानुभवादन्यस्मृतिः स्मरण मुच्यते।

यत्र सदृशस्य पदार्थस्यानुभवेन सदृश वस्त्वन्तरस्मृतिर्जायते तत्र स्मरणालङ्कारः। यथा—

वर्णाश्रमव्यवस्थेयं स्वामिनानेन पालिता।
भट्टजैमिनि मुख्यानां प्राचां स्मरति यज्वनाम्॥

तथा—

अद्वैतविद्यापरिपालितेयं महात्मनानेन मठाधिपेन।
श्रीशङ्कराचार्य सुरेश्वराणां प्राचां स्मरत्यात्मविदां यतीनाम्॥

अत्र प्रथमे भट्टजैमिन्यादितुल्यवर्णाश्रमधर्मव्यवस्था परिपालन-प्रवींणतया रक्षितारमभिनवविद्यातीर्थं प्राप्तवत्याः वर्णाश्रम व्यवस्थायाः पूर्वं भट्ट जैमिनि प्रभृति यज्वनां स्मरणम्। तथा द्वितीये शङ्कर सुरेश्वरादि तुल्याद्वैत विद्यापरिपालन प्रवीणतया रक्षितार-मभिनवविद्यातीर्थं प्राप्तवत्याः अद्वैतविद्यायाः पूर्वशङ्कर सुरेश्वरादि यतीश्वराणां स्मरणम्।

व्याख्या—सदृश वस्त्वन्तरेति। 'सदृशादृष्टचिन्ताद्या स्मृति बीजस्यबोधकाः' इति न्यायेन सदृशानुभवात् पूर्वानुभवजनित संस्कारोद्बोधे सति सदृश वस्त्वन्तर स्मृतिः स्मरणालङ्कार इत्यर्थः।

वर्णाश्रमेति। यज्वनामित्यत्र 'अधीगर्थ दयेशां कर्मणि' इति सूत्रेण कर्मणि षष्ठी।

अथारोप गर्भालङ्कार प्रस्तावः।

अथ रूपकालङ्कारः।

आरोपविषयस्य स्यादतिरोहितरूपिणः।
उपरञ्जकमारोप्यमाणं तद्रूपकं मतम्॥

यत्रावयवरूपणात् अवयविनो रूपणं गम्यते तदेकदेश विवर्ति रूपकम्। यथा—

विभूषिताशेषदिशान्तरालः शमास्पदोऽसौ यतिसार्वभौमः।
गुणप्रसूनैर्विकचैस्त्रिलोकीं दिव्यैः सुगन्धैः सुरभीकरोति॥

अत्रावयवानां गुणानां प्रसूनत्वरूपणेनावयविनो यतिसार्वभौमस्य कल्पवृक्षत्वं रूप्यते। तस्मादेकदेशविवर्तित्वम्। यथा वा—

व्याप्ता लोकान् त्रयीशीर्षवादमन्थमहीभृवा।
मथिताद्वैरिवादाब्धेर्जाता कीर्तिर्जगद्गुरोः॥

अत्र वैरिवादस्याब्धित्वरूपणेन त्रयीशीर्षवादस्य मन्थमहीभृत्त्व रूपणेन च अवयवभूतायाः जातायाः कीर्तेः स्मृतत्वं अर्थादापतति। लोकानाममरत्वं चेति एकदेश विवर्ति रूपकम्।

व्याख्या—विभूषितेति। अलङ्कृतदिशामण्डलः। शमः अन्तरिन्द्रियनिग्रहः। त्रयाणां लोकानां समाहारः त्रिलोकी। तद्धितार्थेत्यादिना समाहारसमासेऽकारान्तोत्तरपदत्वेन स्त्रीत्वात्

'द्विगो' रिति ङीपि त्रिलोकीति। उदाहरणान्तर माह—व्याप्तेति। पूर्वोदाहरणे अवयवरूपणादवयविरूपणस्य गम्यत्वम्। अत्रतु अवयवस्यापीति भेदः।

श्लिष्ट केवलपरम्परितं यथा—
अमेयशक्तिसम्पन्नः वादविक्रमभास्करः।
तमो हरति सम्पूर्णं विद्यातीर्थगुरोस्तव॥

व्याख्या—अमेयेति। अत्र वादविक्रमभास्कर इति रूपणम्। तम एव तम इति श्लिष्टरूपके निमित्त मेकमे वेति श्लिष्ट केवलपरम्परितम्। तमः अज्ञानमन्धकारश्च। तेनानेकरूपकसापेक्ष्ये समस्तवस्तुविषये नास्यान्तर्भावः।

अश्लिष्टमालापरम्परितं वैधर्म्येण यथा—
ईर्ष्या निशीथिनी दीप्तिः कपटातपयामिनी।
विद्यातीर्थस्य नव्यस्य भाति वाक्यार्थ वैखरी॥

व्याख्या—ईर्ष्यैव निशीथिनी रात्रिः। तस्याः दीप्तिः सूर्यातपः। निर्विकारत्वात्तस्य महास्वामिन इति भावः। कपट एवातपः। तस्य यामिनी रात्रिः। एतेन स्वामिनः प्रामाणिकत्वं निर्दोषत्वं च।

अथ परिणामालङ्कारः।

आरोप्यमाणमारोपविषयात्मतया स्थितम्।
प्रकृतस्योपयोगित्वे परिणाम उदाहृतः॥

आरोप्यमाणं प्रकृतोपयोगीत्यनेन सर्वालङ्कारव्यावृत्तिः। तस्य सामानाधिकरण्य वैयधिकरण्याभ्यां द्वैविध्यम्। सामानाधिकरण्येन परिणामो यथा—

मुहुर्मुहुरलङ्कारप्रिया राजन्यशेखराः।
धरन्ति मुकुटैस्तीर्थगुरो राज्ञामयीं स्रजम्॥

अत्रारोपेण प्रकृताज्ञा तादात्म्यमापन्नायाः अप्रकृतायाः स्रजो मुकुट धारणात्मक प्रकृतोपयोगात् परिणामालङ्कारः। अत्र विषय-विषयिणोः समानविभक्तिकत्वात्सामानाधिकरण्यम्।

वैयधिकरण्येन परिणामो यथा—
आशीर्वादार्थिनो भूपाः किरीटमणिघृष्टिभिः।
कृत्वा सुमाञ्जलिं स्वामिपादपीठीं यजन्ति ते॥

अत्र मणिघृष्टि सुमाञ्जल्योर्विषयविषयिणोर्भिन्नविभक्तिकत्वात् वैयधिकरण्यम्।

व्याख्या—आशीर्वादेति। घृष्टिभिः किरणैः। समासोक्तावारोप्यमाणस्य प्रकृतोपयोगित्वेऽपि व्यङ्ग्यत्वम्। परिणामे तु वाच्यत्वमिति तयोर्भेदः।

अथ सन्देहालङ्कारः।
विषयो विषयी यत्र सादृश्यात् कविसम्मतात्।
संदेहगोचरौ स्यातां संदेहालङ्कृतिश्च सा॥

संदेहमात्र पर्यवसायी शुद्धो यथा—

इदं जगद्गुरोरास्यं कमलं वा मनोहरम्।
वियद्गङ्गाप्रवाहो वा प्रौढा वाणी जगद्गुरोः॥

व्याख्या—अत्र लक्षणे कविसंमतादित्यनेन स्थाणुर्वा पुरुषो वेति संदेहस्य नालङ्कारता। वर्णनीयस्योत्कर्षार्थः कविप्रतिभोत्थापितः प्रकृताप्रकृतविषयः संदेहः संदेहालङ्कारः। अत्र प्रथमे सादृश्यं मनोहरत्वम्। द्वितीये तु सादृश्यं प्रौढत्वम्। अत्र मनोहरत्वादि सादृश्यात् जगद्गुरु वक्त्रकमलादिकोटिद्वयगोचरस्य संदेहस्य तावन्मात्र पर्यवसायित्वात् शुद्धोऽयं सन्देह भेदः।

अथ भ्रान्तिमदलङ्कारः।

कविसंमतसादृश्याद्विषये पिहितात्मनि।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः।

यथा—

विद्यातीर्थयशः स्तोमे व्याप्त ब्रह्माण्ड मण्डले।
अहन्यपि चकोरास्ते मोदन्ते चन्द्रिकाशया॥

व्याख्या—विद्येति। अत्र यशःस्तोमे चन्द्रिकानुभवात् भ्रान्तिः।

अथोल्लेखालङ्कारः।

अर्थयोगरुचिश्लेषैरुल्लेखन मनेकधा।
ग्रहीतृभेदादेकस्य स उल्लेखः सतां मतः॥

रुच्यर्थयोगाभ्यां यथा—

विद्याविहारवनमित्यखिलाः सुधीन्द्राः
माहात्म्यशेवधिरितीडित भक्तसंघाः।
औदार्यकल्पतरुरित्यखिलार्थिवर्गाः
श्रीमज्जगद्गुरु मिमं सततं स्तुवन्ति॥

व्याख्या—अर्थेति। अर्थेन प्रयोजनेन योगः अर्थित्वम्। वाञ्छेति यावत्। रुचिरभिरतिः। एतैस्समस्तैर्व्यस्तैर्वा यथायोगं ग्रहीतृगतैरेकस्य वस्तुनः नानाधर्मयोगात् अनेकधोल्लेखनमुल्लेखालङ्कारः। शेवधिः निधिः। अत्रैकस्य जगद्गुरोः विद्याविहारवनमिति, माहात्म्य शेवधिरिति, औदार्यकल्पतरुरिति, सुधीन्द्रभक्त याचकाद्यनेक ग्रहीतृभिरनेकधोल्लेखनात् उल्लेखालङ्कारः।

श्लेषेण यथा—

धैर्येऽचलो गुणे भास्वान् वादेऽनन्तो मतौ गुरुः।
अङ्गेषु राम इत्याहुः विद्यातीर्थं मिमं नवम्॥

व्याख्या—धैर्ये इति। धैर्ये अचलः स्थिरः पर्वतश्च। गुणे भास्वान् सूर्यः तेजस्वी च। वादेऽनन्तः अन्तरहितः श्रेष्ठश्च। मतौ गुरुः। अज्ञाननिवर्तकः बृहस्पतिश्च। अङ्गेषु रामः—दाशरथिरभिरामश्च। अत्र ग्रहीतृभेदाभावेऽपि धैर्यादि विषयभेदात् श्लेषेणाचलत्वाद्यनेक धर्मोल्लेखनादुल्लेखः।

अथ उत्प्रेक्षालङ्कारः।

यत्रान्यधर्मसम्बन्धादन्यत्वेनोपतर्कितम्।
प्रकृतं हि भवेत् प्राज्ञा स्तामुत्प्रेक्षां प्रचक्षते॥

यत्राप्रकृतगुणक्रियासम्बन्धात् अप्रकृतत्वेन प्रकृतस्य सम्भावनं तत्रोत्प्रेक्षा ।

उपात्तगुणनिमित्त जातिभाव स्वरूपोत्प्रेक्षा यथा—

प्राचीनानां गुरुमठरमा भोगभाजां यतीनां
कीर्तिं कीर्तिस्त व पिदधती कोटिचन्द्रप्रकाशा ।
विद्यारक्षा पटु यतिपति प्राप्ति हर्षोत्थितासौ
काष्ठान्तेषु स्फुरति जगता मट्टहासप्रभेव ॥

अत्र प्रभाशब्दः जाति वचनः । हर्षरूपगुणः निमित्तम् । जगदट्टहासप्रभायाः कविप्रौढोक्तिसिद्धत्वात नास्त्युपमाशङ्कावकाशः ।

उपात्त क्रिया निमित्त जातिभाव स्वरूपोत्प्रेक्षा यथा—

श्रीशारदा मठपतेः श्रुतिधर्मराज्य
पट्टाभिषेक कमलैः सरसीकृताऽसौ ।
तुङ्गापगा रुचिरवीचिमनोहरास्ते
शृङ्गाद्रि भूमिललना मणिमेखलेव ॥

अत्र मणिमेखलेवेत्यु प्रेक्षायां तरङ्गरुचिरत्वयुक्तायाः तुङ्गापगायाः सरसीकरणं क्रियारूपं निमित्तम् ।

व्याख्या—श्रीशारदेति । आपगा नदी । अपां समूहः आपम् । तेन गच्छतीत्यापगा । 'अन्येभ्योऽपि दृश्यते' इति वार्तिकात् डः । अयं ह्रस्वादिरपि दृश्यते । 'विप्रादगार मागार मपगामापगामपि' इति द्विरूपकोशात् । इदं वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ।

अनुपात्तनिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा—

श्रीशारदापीठयतेरमुष्य नरवेन्दुशोभा नमतां नृपाणाम् ।
लग्ना ललाटे विधिना कृताया लिप्यावलेर्दर्शन दीपिकेव ॥

अत्र दर्शनदीपिकेवेति जातिवचनात् जातिरुत्प्रेक्ष्यते । निमित्तं नोपात्तम् । अतोऽत्र शोभायाः लोकोत्तरत्वं गम्यते ।

उपात्तगुण निमित्त जात्यभावस्वरूपोत्प्रेक्षा यथा—

गुणामृतोर्मिभिर्धौता विमला विमताधिपाः ।
प्रक्षालिता गतासूया बोधपूरैर्जगद्गुरोः ॥

अत्रगतासूया इति जात्यभावं प्रति गुणात्मकबोधपूरस्य हेतुत्वम् ।

व्याख्या—गुणेति । अत्र गतासूया इति असूयाभाव उत्प्रेक्ष्यते । तत्र गुणात्मक बोधः निमित्तम् ।

अनुपात्तनिमित्त जात्यभाव स्वरूपोत्प्रेक्षा यथा—

कृत्वाऽगुरूनिव मठान् जैत्रयात्रा जगद्गुरोः ।
विधत्तेऽभिनवान्विद्यातीर्थान् प्रतिमठं गुरून् ॥

व्याख्या—कृत्वेति । मठे मठे प्रतिमठम् । मठान् विमतमठान् । अगुरून् कृत्वेत्यत्र जात्यभावस्वरूपोत्प्रेक्षा अनुपात्तनिमित्ता । अत्र जैत्रयात्रा कर्त्री ।

उपात्त गुणनिमित्त जातिभाव हेतूत्प्रेक्षा यथा—

दाक्षिण्यकेन्द्रीय मठाधिनाथवक्त्राब्जसद्वासनयेव नित्यम् ।
श्रीशारदा शारदसारसास्या विस्मारितासौ चतुरास्यवासम् ॥

व्याख्या—अत्र सद्वासनयैवेति जातिहेतुत्वम्। चतुरास्यवासं विधातृचतुर्वक्त्रनिवासम्। विस्मारितेति। गतिबुद्धीत्यादिना अण्यन्तकर्त्र्याः शारदायाः कर्मत्वम्। तस्मिन्नभिधेये कर्मणि क्तः। 'ण्यन्ते कर्तुश्च कर्मणः' इति वचनात्। अत्र सद्वासनयेति जातिभाव हेतूत्प्रेक्षायाः चतुरास्य निवास विस्मरणं फलं निमित्तम्।

जात्यभाव हेतूत्प्रेक्षा यथा—

अगुरुत्वादनन्ताया लोकं मत्वेव विश्वसृट्।
ससर्जाभिनवं विद्यातीर्थमन्वर्थनामकम्॥

अत्र अगुरुत्वादिति जात्यभावस्य हेतुत्वम्।

व्याख्या—अगुरुत्वादिति। अनन्तायाः भूमेः अगुरुत्वात् बृहस्पत्यभावात्। अत्रागुरुत्वादिति जात्यभावः हेतुः। अभिनव विद्यातीर्थसृष्टिः फलम्।

जातिफलोत्प्रेक्षा यथा—

शङ्केऽद्वैतामृतं नव्यं स्वादु दातुं दिवौकसाम्।
शृङ्गेरीशैलकूटा निःश्रेणी भवितुमुन्नताः॥

अत्र निःश्रेणी भवितु मिति जातेः फलत्वम्।

व्याख्या—निःश्रेणिः अधिरोहिणी। अत्र निःश्रेणी भवितुमिति जातिभावफलोत्प्रेक्षाया मुन्नतत्वगुणो निमित्तम्।

जात्यभावफलोत्प्रेक्षा यथा—

म्लेच्छा नभाष्यानालोच्य द्वेषिणः श्रीमठेशितुः।
प्रायेणानार्य भावाय धरन्ति म्लेच्छ भूमिकाम्॥

व्याख्या—म्लेच्छानिति। अत्रानार्यत्वाय जात्यभावफलो-त्प्रेक्षायां म्लेच्छभूमिकाश्रयणक्रिया निमित्तम्। एवमुत्तरत्रापि तादर्थ्यप्रतिपादक चतुर्थ्यादि श्रवणे फलत्वमूह्यम।

क्रियास्वरूपोत्प्रेक्षा यथा—

श्रीशारदा मठपतेः द्विषतां जितानां
श्वासानिलैः पतितशुष्कपलाशनादाः।
तेषां निवासनिलयाय कृतार्थनानां
प्रत्युत्तराणि ददतीव वनप्रदेशाः॥

व्याख्या—श्रीशारदेति। पलाशः पर्णः। अर्थना याच्ञा। शुष्कपलाशानां नादा येषां ते तथोक्ताः। अत्र प्रत्युत्तररूप दानोत्प्रेक्षायां शुष्क पलाशनादरूपगुणः निमित्तम्।

क्रियास्वरूपाभावोत्प्रेक्षा यथा—

पराङ्मुखे श्रीमठपीठनाथे पंचास्यवक्त्राद्रि गुहाप्युदग्रा।
निजान्तरावासमिवाददाना गर्जत्यसौ तत्प्रतिपक्षभाजाम्॥

व्याख्या—पराङ्मुख इति। प्रतिपक्षभाजां प्रतिवादिनाम्। जैत्रयात्रायां जितानामिति भावः। अत्र गर्जनक्रिया अददानेवेति दानाभावोत्प्रेक्षायां निमित्तम्।

क्रियाहेतूत्प्रेक्षा यथा—

मतान्तरप्रविष्टानामहङ्कार नवाङ्कुराः।
म्लानाः शिष्यालिवादार्कतीव्रोष्माभिभवादिव॥

अत्राभिभवादिवेति क्रियाहेतुत्वम्। म्लानत्वमुत्प्रेक्षा फलम्।

क्रियाहेत्वभावोत्प्रेक्षा यथा—

श्रृङ्गशैलमठाधीश पालने मर्त्यविष्टपे ।
अजीवनादिवासत्यमज्ञानं नष्टतां गते ॥

अत्र अजीवनेति क्रियाभावोत्प्रेक्षा नष्टताप्राप्तिनिमित्ता। अजीवनं देहप्राण वियोगानुकूल व्यापारः ।

क्रियाफलोत्प्रेक्षा यथा—

जगद्गुरोर्गच्छति जैत्रयात्रा शास्त्रार्थसंरम्भसमिद्भिनादः ।
अन्वेष्टुमन्तर्धिगता निवात्मप्रद्वेषिणश्शैलगुहान्तराणि ॥

अत्रान्वेषण क्रियाफलोत्प्रेक्षा गुहान्तरगमनक्रियानिमित्ता ।

व्याख्या—जगद्गुरोरिति । समित् युद्धः । अन्तर्धिः अन्तर्धानम् । आत्मनः द्वेषिणः आत्मद्वेषिणः । अन्तश्शात्रवः कामक्रोधादयः ।

क्रियाभावफलोत्प्रेक्षा यथा—

लोकालोकगिरौ निकुञ्जनिवहे गन्धर्वसीमन्तिनी
सन्दोहास्सकुतूहला विहरणे स्वादुस्वनैर्नूतनैः ।
गायन्तीव तदन्धकारवितते रस्प्रष्टुमाकल्पित
ज्योत्स्नार्घं नवतीर्थपाद यतिराड्दीव्यद्यशोवैभवम ॥

व्याख्या—लोकालोकेति । आकल्पितज्योत्स्नाया इव अर्घः पूजाविधिः यस्य तत्तथोक्तम् । यशश्चन्द्रिकासदृशमित्यर्थः । यशोगानस्यान्धकाराऽस्पर्शः फलम् ।

गुणस्वरूपोत्प्रेक्षा यथा—

विभाति स्वामिपादानां कृपापाङ्ग निरीक्षणम्।
प्रजास्वपि च सर्वासु प्रसादो देहवानिव॥

व्याख्या—विभातीति। अत्र प्रसादगुणस्य देहवद्विशेषणादुत्प्रेक्षालाभः। निमित्त मत्र नोक्तम्।

गुणाभाव स्वरूपोत्प्रेक्षा यथा—

इयमभिनवविद्यातीर्थपट्टाभिषेक
स्नुत घनरसलेशैश्शीतलाङ्गा मठश्रीः।
प्रशमितमठपीठीभूरिभारात्तपूर्व
व्रति यति पति तीव्र श्वासजोष्मेव भाति॥

अत्र प्रशमितोष्मेति गुणाभावः।

व्याख्या—इयमिति। घनरसं जलम्। 'मेघपुष्पं घनरस' मित्यमरः। अत्र मठश्रीरूपे धर्मिणि ऊष्मप्रशमनलक्षणो धर्मः उत्प्रेक्ष्यते। अत्र शीतलाङ्गत्वं निमित्त मुपात्तम्।

गुणहेतूत्प्रेक्षा यथा—

सदा जयश्रीसमुपासितोऽसौ शास्त्रार्थवादस्तु जगद्गुरूणाम्।
जयश्रियं वैरि मताधिपाना मक्षान्तिभावादिव हर्तुमास्ते॥

अत्र अक्षान्तिभावादसूयाभावादिवेति गुणस्य हेतुत्वम्।

व्याख्या—सदेति। अक्षान्तिः असूया। 'अक्षान्तिरीर्ष्यासूया तु' इत्यमरः। विशिष्टवस्तुसंग्रही लेशतोऽपि तस्यान्यत्रावस्थानं न सहते। अत एव इयमुपात्तनिमित्ता गुण हेतूत्प्रेक्षा।

गुणाभावहेतूत्प्रेक्षा यथा—

जातास्मि श्रृङ्गाद्रि मठेश्वरश्री वदान्यता पादतलप्रमाणा ।
इत्यप्रमोदादिव केवला सा चिन्तामणी प्रस्तरता मवाप ॥

अत्राप्रमोदादिवेति गुणाभावस्य हेतुत्वम् ।

गुण फलोत्प्रेक्षा यथा—

सदानिजानां विषधूम्रिताशिषां
सितत्वसम्पादनमाप्तुमन्वहम् ।

जगद्गुरोरस्य गुणान् सुधामुचः
फणीश्वरः स्तोतुमिवोत्सुकोऽभवत् ॥

अत्र सितत्वसम्पादनेति गुणस्य फलत्वम् ।

द्रव्य स्वरूपोत्प्रेक्षा यथा—

सदा न पूर्णतात्रेति मुक्त्वा नभो भूमितलावतीर्णः ।
विधुरिव विश्वकलाढ्यस्त्वभिनवविद्यातीर्थो विराजते ॥

व्याख्या—सदेति । अत्र नभसि विश्वकलाढ्यः सर्वकला परिपूर्णः । कला विद्या च । अभिनवः गुणैरपूर्वः । विद्यातीर्थः । अत्र विधोर्भूमितलाऽवतीर्णस्य कविकल्पितत्वादुत्प्रेक्षाविपयत्वमेकत्वात् द्रव्यत्वं च ।

द्रव्यस्वरूपाभावोत्प्रेक्षा यथा—

अश्रान्तविश्राणनविश्रुतेऽस्मिन् सार्थीकृताशेपवनीयकादौ ।
आचार्यरत्नेभुवि राजमाने कृतेव चिन्तामणिना विना द्यौः ॥

अत्र दिवः चिन्तामण्यभावः उत्प्रेक्ष्यते ।

व्याख्या—अश्रान्तेति । विश्राणनं वितरणम् । वनीयकः याचकः । 'वनीयको याचनको मार्गणो याचकार्थिनौ ।' इत्यमरः । आदिशब्देन दीनानाथादयः उच्यन्ते । चिन्तामणिस्तावदेक एव । तस्य जगद्गुरुरूपतया भूलोके वर्तमानत्वात् कुतो दिवश्चिन्तामणिरिति भावः ।

द्रव्यहेतूत्प्रेक्षा यथा—

गुरुणानेन चार्वाक बौद्धादिमत जृम्भणम ।
शङ्करेणापरेणेव तर्कशस्त्रेण खण्डितम् ।

व्याख्या—गुरुणेति । तर्कं शस्त्रं यस्य स इति विग्रहः । अत्र शङ्करेणापरेणेति द्रव्यहेतूत्प्रेक्षा । अत्रापरशब्दप्रयोगेण प्रकृत-महास्वामी अपरशङ्करत्वेनाध्यवसीयते । तस्य इव शब्देन साध्य-त्वात् । इवशब्दाप्रयोगे तु अतिशयोक्तिः । इवापरशब्दयोरुभयो रभावे रूपकम् ।

द्रव्यहेत्वभावोत्प्रेक्षा यथा—

पीठेन्द्रकीर्तिदुग्धाब्धिलीनेन रजताद्रिणा ।
अकैलासाचलेनेव विधाता व्याकुलीकृतः ॥

अत्राकैलासाचलेनेति हेत्वभावः ।

व्याख्या—पीठेन्द्रेति । अकैलासाचलेन कैलासाचला-भावेनेत्यर्थः । अत्राभाव वाचिनो नञः क्रियासापेक्षत्वेनासमर्थस्यापि

'सुडनपुंसकस्य' इति ज्ञापकात् क्वचित्समास इष्यते। अतएव कैयटः 'असमर्थनञ् समासस्य क्वचित् साधुत्वज्ञापनाय अनपुंसकस्येति प्रसज्यप्रतिषेध आश्रीयते" इति।

द्रव्यफलोत्प्रेक्षा यथा—

नूनं श्रीचरणैर्लोके ब्रह्मविद्या प्रकाश्यते।
वामदेवशतायेव याज्ञवल्क्यायुताय च॥

अत्र वामदेवशतायेति द्रव्यस्य फलत्वम्।

व्याख्या—नूनमित्येतत् द्वितीयोत्प्रेक्षासाधकम्।

अतिशयोक्त्यलङ्कारः।

विषयस्यानुपादानात् विषय्युपनिबध्यते।
यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्ति जीविता॥

यत्र कविप्रौढोक्त्या विषयतिरोधानेन विषयी निबध्यते सा अतिशयोक्तिः। यत्र विषयविषयिणोः अभिहितयोरभेदप्रतिपत्तिरारोपः। यत्र विषयनिगरणेनाभेदप्रतिपत्तिः तत्राध्यवसायः। तस्याश्चातुर्विध्यम् १. भेदे अभेदः। २. अभेदे भेदः। ३. सम्बन्धेऽसम्बन्धः। ४. असम्बन्धे सम्बन्ध इति।

भेदे अभेदो यथा—

स्थाने कलानिधिर्जातो जगद्गुरुकुलोदधेः।
लक्ष्मीपतिरसौ चित्रं महीमण्डलमण्डनम्॥

अत्र जगद्गुरु कलानिध्योरभेदाध्यवसायः।

व्याख्या—अत्र विषयी कलानिधिः प्राधान्येनोपनिबध्यते। विषयस्य जगद्गुरोः विषयिणा निगीर्णत्वात्। स्वरूप प्रतिपत्तेरभावात्। तथा चाध्यवसाये विषयस्य कुत्रापि प्राधान्यशङ्का नाव तरति। 'इदं रजत' मित्यत्रातिव्याप्ति वारणाय कवि प्रौढोक्ति जीवितेति विशेषणम्। अत्र कलानिधिजगद्गुर्वोरुपमानोपमेययोर्वस्तुतः भेदेऽप्यभेदकथनादतिशयोक्तिः। महोदधेः कलानिधेरुत्पत्ति रुचिता। अमृतांधसामुपयोगिनस्तस्य लक्ष्मीसोदरस्य लक्ष्मीपतित्वं चित्रमिति भावः। कलानिधिसदृशो जग द्गुरुरिति फलितार्थः। जगद्गुरुः विद्यानिधिः पीठलक्ष्म्यधिपतिरिति श्लेषेणोपस्कृतातिशयोक्तिरिति विशेषः।

अभेदे भेदो यथा—

पाण्डित्यं महदन्यदेव महती शास्त्रार्थवादप्रथा
काप्यन्या महिमान्य एव तपसस्तेजस्वितान्यादृशी।
सर्वं नूत्नमिदं जगद्गुरुयतेर्धातुस्तु तन्निर्मितौ
सामग्री कियती क्व वा समुदिता को वास्य सृष्टिक्रमः॥

व्याख्या—अत्र पाण्डित्यादेः वास्तवाभेदेऽपि भेदः कल्पितः। ततः स्वतः सिद्ध कविप्रौढोक्तिसिद्धयोः पाण्डित्ययो र्भेदे अभेदाध्यावसायः।

सम्बन्धेऽसम्बन्धो यथा—

शेषो विषधरः कल्पो वृक्षश्चन्द्रः कलङ्कवान्।
दुष्टेयं सृष्टि रीशानं गुरुमेनं कथं स्पृशेत्॥

अत्र ब्रह्म सृष्टि सम्बन्धेऽपि जगद्गुरोरसम्बन्धः उक्तः। अत्रातीत ब्रह्मसृष्टिना ईशानेनाभेदाध्यवसायः।

असम्बन्धे सम्बन्धो यथा—

मूढोऽयं भवितेति धातृलिखितां फाले यथाजन्मन
स्तामल्पीकृतशेषवागवितथां कुर्वन् लिपीं जाग्रतीम्।
तन्मौढ्यस्य तु मूढतां यतिपतिस्सम्पाद्य तेजोनिधि
र्विद्यातीर्थ जगद्गुरुस्त्वभिनवो विभ्राजते भूतले॥

अत्र एवंकरणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति भेदः।

व्याख्या—मूढोऽमिति। यथाजन्मा अज्ञः। 'अज्ञे मूढ यथाजन्ममूर्ख वैधेय वालिशाः' इत्यमरः। जननकालमनतिक्रम्य वर्तत इति यथाजन्मा। 'जनीप्रादुर्भावे' इत्यस्माद्धातोः मनिनि कृते जन्मेति। लिपिः अक्षरविन्यासः। मौढ्यस्य मूढतां-मौढ्यराहित्यम्। अवितथां, अमोघां। ब्रह्मशासनस्य अनतिक्रमणीयत्वात् कथंचित् ब्रह्मलिपेरर्थवत्त्वं संपादितवानित्यर्थः। जगद्गुरुः ब्रह्मलिखितमप्यन्यथा कर्तुं समर्थ इति भावः। एवंकरणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः।

कार्यकारणयोः पौर्वापर्य विपर्ययरूपातिशयोक्तिर्यथा—

जगद्गुरोरस्य कटाक्ष पातादग्रेसरास्ते कथमर्थसिद्धिः।
तद्दातृतानिर्जितनिर्जरद्रुरप्यस्य नूनं हि बभूव दासः॥

व्याख्या—अत्र कार्यभूताया अर्थसिद्धेः कारणभूतात्कटाक्षपातात् पूर्वकालत्व मुक्तम्। अतोऽत्र कार्यकारणयोः पौर्वापर्य विपर्ययरूपातिशयोक्तिः।

अथ सहोक्तिः ।

सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः ।
कल्पितौपम्यपर्यन्ता सा सहोक्तिरितीष्यते ॥

यत्र भेदेऽयभेदरूपया कार्यकारण पौर्वापर्य विपर्ययरूपया वातिशयोक्त्या एकस्य प्राधान्येनान्वये अपरस्य सहार्थेन सम्बन्धे उपमानोपमेयभावः कल्प्यते तत्र सहोक्तिः । प्राकरणिकाप्राकरणिक विषयत्वादुपमानोपमेयभावस्य सहार्थसम्बन्धेन द्वयोरपि प्रकृतत्वान्न तदात्मता ।

कार्यकारण पौर्वापर्य विपर्ययरूपातिशयोक्तिमूला सहोक्तिर्यथा—

वदावदाग्रे सरनव्यतीर्थं जगद्गुरोरस्य महामहिम्नः ।
कीर्तिर्दिगन्तान्यगमत् सहैव नतोत्तमाङ्गैः प्रतिवादिमुख्यैः ॥

व्याख्या—अत्र नतोत्तमाङ्ग प्रतिवादि कर्तृक गमनानन्तर भाविनः जगद्गुरु कीर्तिगमनस्य सहकालत्व मुक्तमिति कार्यकारण पौर्वापर्यविपर्ययः । अपि चात्र प्रतिवादि दिगन्त गमनमिव कीर्ति दिगन्तगमनमित्येवं प्रतीयमानस्योपमानोपमेय भावस्य प्राकरणिकाप्राकरणिक विषयत्वं विवक्षाधीनम् । यथा वा—

दिने दिने तीर्थमठाधिपस्य प्रभावलक्ष्मीरुदयं प्रयाति ।
सत्रा सवित्रा सुपवित्रभासा प्रद्योतिताशेष दिशान्तराला ॥

अत्र "उदयं प्रयाति" इति श्लेषेण उदयपर्वताभ्युदययोरभेदाध्यवसायः ।

व्याख्या—दिने दिने इति। सत्रा सह। 'सार्धं तु साकं सत्रा समं स' इत्यमरः। अत्र श्लेषभित्तिकाध्यवसायमूला सहोक्तिः।

अथ विनोक्तिः।

विना सम्बन्धि यत्किंचित् यत्रान्यस्य परा भवेत्।
अरम्यता रम्यता वा सा विनोक्तिरिति स्मृता॥

यत्र कस्यचिदसन्निधानात् वस्तु रम्यमरम्यं वा भवेत् सा विनोक्तिः। सा द्विविधा अरम्यता रम्यता चेति।

अरम्यता यथा—

जगद्गुरोरस्य गुणाभिवर्णनं विना न शोभा कविकाव्यसम्पदः।
सदा चिदानन्दपरात्मवर्णनं विना न शोभा निगमान्तसम्पदः॥

अत्र जगद्गुरुगुणवर्णनेन विना काव्यश्रियः अशोभनत्वमुक्तम्। अनेन काव्यशोभामिच्छद्भिः कविभिः जगद्गुरुगुणाः वर्णयितव्या इति विधिरेव प्रकाश्यते।

व्याख्या—निगमान्ताः वेदान्ताः। विधिरेवेति। अत एव 'प्रबन्धराशेः महापुरुषगुणवर्णनं हेम्नः परमामोदः' इति, 'वेदान्ता अपि ब्रह्मप्रतिपादकतया पर मुत्कृष्यन्ते" इति च महाकवि विद्यानाथोक्तिस्संगच्छते।

रम्यता यथा—

गुरोः सभा विभात्येषा विना पण्डितमानिभिः।
सदा राजसभा शस्ता विना सा मन्त्रिमानिभिः॥

व्याख्या—शस्ता श्लाघ्या। मन्त्री धीसचिवः। मन्त्रः गुप्तभाषणमस्यास्तीति मन्त्री। 'अतइनिठना' वितीनिः। मन्त्रिण-मात्मानं मन्यत इति मन्त्रिमानी। "आत्ममाने खश्च" इति णिनिः।

अथ वक्रोक्तिः।

अन्यथोक्तस्य वाक्यस्य काका श्लेषेण वा भवेत्।
अन्यथा योजनं यत्र सा वक्रोक्तिर्निगद्यते॥

यथा—

वहुप्रियोऽयं खलु पीठनेता सायुज्यसत्यां सखि गाढचेताः।
तस्या अपि त्वं भण कुत्र हीना स्वात्मानमेवं लघयस्यलं किम्॥

व्याख्या—अत्र सालोक्यनायिकां प्रति चर्या सखी वदति। त्वं सायुज्यसत्या अपि हीनगुणा न भवसि। अतः त्वय्यपि पीठनेता सक्तचित्त एव। स्वात्मानं किं लघूकरोषीति काका प्रतीयते।

अथ व्याजोक्तिः।

व्याजोक्तिस्सा समुद्भूतं वस्तु यत्र निगूह्यते।

यथा—

विद्यातीर्थो गुरुरभिनवो दक्षिणाम्नायपीठी
पद्मापाणिग्रहणसमये हर्षजे रोमहर्षे।
सर्वाङ्गीणे शिशिरकमलैः केन्द्रपीठाभिषेकः
कर्तव्यः स्यात् किमिति विबुधान् वीक्षते मन्दहासः॥

अत्र पीठीपद्मापाणिग्रहण हर्षजनितं रोमाञ्चं धीरोदात्ततया अभिषेकजलशैत्यव्याजेन प्रच्छादयता अभिनवविद्यातीर्थेन विबुधा वीक्ष्यन्ते।

व्याख्या—सर्वाण्यङ्गानि व्याप्नोतीति सर्वाङ्गीणः। 'तत्सर्वादे' रिति खप्रत्ययः। अत्र निगूढः पीठीपद्मापाणिग्रहणजन्यः हर्षः रोमहर्षेण प्रकाशितः। सलिलशैत्यव्याजेनाच्छादितः। मन्दः हासः यस्य सः तथोक्तः।

अथ मीलनम्।

मीलनं वस्तुना यत्र वस्त्वन्तर निगूहनम्।

यत्र वस्तुना वस्त्वन्तरं प्रच्छादितं भवति स मीलनालङ्कारः। स द्विविधः। सहजेनागन्तुकतिरोधानं, आगन्तुकेन सहजतिरोधानं चेति।

सहजेनागन्तुकतिरोधानं यथा—

पञ्चत्रिंश जगद्गुरोरनुपमैर्वाक्यार्थ विस्फूर्जितैः
संसत्प्रान्त विसर्जितास्तु विमताः क्वापि प्रलीना इति।
तादृक्तीव्रमनोव्यथाज्वरजुषा मङ्गेषु सम्बन्धिना
माक्रान्तोऽपि न दृश्यते पथि खरग्रीष्मस्तदन्वेषिणाम्॥

अत्र सहजेन विमतसम्बन्धिगतेन व्यथोष्मणा मार्गवशादागन्तुकः ग्रीष्मोष्मा तिरोधीयते।

व्याख्या—विस्फूर्जितैः विजृम्भितैः। संसत् सभा। विसर्जितसंसत्प्रान्ता इत्यर्थः। 'वाहिताग्न्यादिषु' इति परनिपातः।

आगन्तुकेन सहज तिरोधानं यथा—

तीर्थेन्द्रवादप्रतिभाप्रभावा दन्तर्भयादन्यमताधिपानाम्।
वैस्वर्यकम्पाद्युदयेऽप्यजस्रं भक्त्या तदीयास्तु न विश्वसन्ति॥

अत्र भयजनितेन कम्पादिना आगन्तुकेन सहजस्य भक्तिजनितस्य कम्पादेस्तिरोधानम्।

व्याख्या—अन्तर्गतं भयमन्तर्भयम्। वैस्वर्यं विस्वरत्वम्। भक्तिमूलानामपि वैस्वर्यकम्पादीनां भयानुभावत्वशङ्कयेति भावः।

**अथ सामान्यालङ्कारः।**

सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता।

यत्र एकस्य वस्तुनः गुणसाम्येन वस्त्वन्तरैकात्म्यं भवति स सामान्यालङ्कारः। यथा—

क्षीराब्धिकैलासनिवासदेशे जगद्गुरोरस्य यशस्यदृश्ये।
समीपगीर्वाणगणान् विलोक्य भ्रान्तौ हरीशौ प्रथितौ स्मयेते॥

अत्र जगद्गुरु यशसि जगत्सु विजृम्भिते सति क्षीराब्धिप्रभ्रतीनां विमलवस्तूनां तदैकात्म्यमभिवर्णितम्।

व्याख्या—क्षीराब्धीति। स्मयेते मन्दं हसतः।

**अथ तद्गुणालङ्कारः।**

तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः।

यथा—

मुहुरभिनव विद्यातीर्थशृङ्गाद्रिपीठ
प्रभुपदनखरोद्यत्कौमुदीकान्तिपूरैः।
प्रणतनृपति मौलिप्रस्फुरल्लोहिताश्च
न्मरकत मणिवर्णाः शुक्लवर्णाः क्रियन्ते॥

अत्र प्रणमतां नृपतीनां मौलिस्था मणयः स्वां शोणादिप्रभां मुक्त्वा अभिनव विद्यातीर्थपदनखज्योत्स्नागतं धवलिमानमुद्वहन्ति।

व्याख्या—'गारुत्मतं मरकत मश्मगर्भो हरिन्मणिः। शोणरत्नं लोहितक पद्मरागो हि मौक्तिकम्॥' इति चामरः। मीलने वस्त्वन्तर निगूहनम्। इह पुनरनिगूहितस्य अन्यगुणेनोपराग इति सर्वस्वकारहृदयम्। तस्य अप्रकृतस्य गुणः अत्रास्तीति तद्गुणः।

अथ अतद्गुणः।

सति हेतावन्यगुणास्वीकारः स्यादतद्गुणः।

यत्र सन्निधानरूपे हेतौ सत्यपि अन्यगुणस्वीकारो नास्ति असावतद्गुणालङ्कारः।

द्रुहिणहरिगिरीशप्रान्तदेशेषु नित्यं
चरति जगति शश्वत्सर्ववस्तुप्रपूर्णे।
स्फुरति तदपि चान्द्रीकान्तिसौवस्तिकी ते
मुहुरभिनवविद्यातीर्थ कीर्तिः स्वभासा॥

अत्र विधिहरिहराणां समीपवर्तिषु जगत्सु तत्तन्नानाप्रभासमग्रेष्वपि सदा विहरमाणायाः विद्यातीर्थकीर्तेः निरङ्कुशः स्वकीय एव धवलिमा विजृम्भते।

व्याख्या—चान्द्री चन्द्रिका। सौवस्तिकी सदृशी। स्वस्तीत्याहेत्यर्थे 'तदाहेति माशब्दादिभ्यष्ठग् वाच्यः' इति ठक् प्रत्ययः। तत्सदृशीति भावः। स्फुरति प्रकाशते।

अत्र हरिहरादि वर्णविशिष्टे जगति गुरोः कीर्ति विभवः स्ववर्णमजहन्नेव चरतीत्यर्थः। अत एवाय मतद्गुणः।

अथ विशेषालङ्कारः।

आधाररहिताधेयमेकं चानेकगोचरम्।
अशक्यवस्तु करणं विशेपालङ्कृति स्त्रिधा॥

यत्राधार मन्तरेणाधेयो निवध्यते स एको विशेपः। एकस्यानेक गोचरत्वे द्वितीयो विशेपः। प्रकृतादशक्य वस्त्वन्तर करणे तृतीयो विशेषः।

तत्र प्रथमो यथा—

शुक सनक सनन्दनादि मुख्य
प्रयत यतीश्वर संश्रिता समज्ञा।
प्रतिदिन मधुनाप्युपेत्य सख्यं
जयति जगद्गुरु नव्यतीर्थ कीर्त्या॥

अत्र प्राचां यतीश्वराणां आधारभूतानां तिरोधानेऽपि तदाश्रितायाः कीर्तेः अवस्थानम्।

व्याख्या—शुकेति। प्रयताः पूताः। समज्ञा कीर्तिः। अधुनापि शुकसनकादीनामभावसमयेपीत्यर्थः। शुकादिसदृश कीर्तिरयं महास्वामीति भावः।

द्वितीयो यथा—

मठेश्वरजितैर्वादे गच्छद्भिर्भयविह्वलैः।
अन्तर्बहिः पुरः पश्चात् दृश्यते श्रीमठेश्वरः॥

अत्र वादे जितैः भल्लैः गच्छद्भिः एकोऽपि मठेश्वर अनेकत्र दृश्यत इति विशेषालङ्कार भेदः।

तृतीयो यथा—

सभास्थले यत्र जने जगद्गुरो रपाङ्गदृष्टिर्लगति प्रसादजा।
स गौतमं पाणिनि बादरायणा वतीत्य भाति प्रतिभाधुरंधरः॥

अत्र साधारणो जनः जगद्गुरोः प्रसन्नदृष्टि पात्रीकृतः किं किमाधिक्यं न लभते ? इत्यशक्य वस्त्वन्तर करणम्।

व्याख्या—अत्र सभायां यत्र साधारणे जने प्रसन्नदृष्टिः लगति स जनः लोकोत्तर विद्यावैभव मनुभवतीत्युक्त्या विशिष्टे जने तस्याः पतने किं वक्तव्यमिति अर्थापत्तिः व्यज्यते।

अथ विभावना, विशेषोक्तिश्च।
कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना।
तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते॥

यत्र प्रसिद्धकारणस्य परित्यागेन कार्यस्योत्पत्तिरुपनिबध्यते सा विभावना। यत्र कारणसाकल्ये सत्यपि कार्यस्यानुत्पत्तिः सा विशेषोक्तिः।

यथा—

जगद्गुरोरस्य महामहिम्नः कृपाकटाक्ष प्रतिपत्तिभाजाम्।
सुखान्यपुण्यानि समुद्भवन्ति दुःखानि पापेऽपिच नोद्भवन्ति॥

अत्र सुख प्रादुर्भावस्य प्रसिद्ध कारणं पुण्यम्। तेन विनापि सुखस्योत्पत्ति र्निवद्धा। तथा दुःखस्य कारणं पापम्। तस्मिन् सत्यपि दुःखस्यानुत्पत्ति रुक्ता।

व्याख्या—अविद्यमानं पुण्यं येषां तान्यपुण्यानि। प्रतिपत्तिः गौरवम्। अत्र वस्तुतः सुखस्य प्रसिद्ध कारणं पुण्यम् तदभावेऽपि सुखमुपनिवद्धमिति विरोधः। तस्य जगद्गुरु कृपाकटाक्ष पात्रत्वेन परिहारः। दुःखस्य कारणं पापम्। तस्य सत्वेऽपि दुःखस्यानुत्पत्ति र्निवद्धेति विरोधः। सः पाप प्रतिवन्धक जगद्गुरु कटाक्ष प्राप्त्या परिहरणीयः।

अथ असङ्गत्यलङ्कारः।
कार्यकारणयोर्भिन्नदेशत्वे सत्यसङ्गतिः।

यत्र एकदेशवर्तिनोरपि कार्यकारणयोर्भिन्नदेश स्थितिर्निवध्यते असावसङ्गत्यलङ्कारः। यथा—

धर्मराज्यबृहद्भारं महास्वामिनि बिभ्रति।
नम्रीभवन्ति मूर्धानः मठेन्द्राणां मुहुर्मुहुः॥

अत्र स्वामिनि धर्मराज्यभारः, शाखा मठाधिपेषु नमनमिति कार्य कारणयोर्भिन्नदेशस्थत्वम्।

अथ विचित्रालङ्कारः।
विचित्रं स्वविरुद्धस्य फलप्राप्त्यर्थमुद्यमः।

यत्र स्वविरुद्ध फलप्राप्त्यर्थं उद्योगः क्रियते स विचित्रालङ्कारः। यथा—

विद्यातीर्थगुरोरग्रे दूरात् सर्वे मठाधिपाः।
आन्दोलेभ्योऽवरोहन्ति तानारोढु मसंशयम्॥

व्याख्या—अत्रारोढुमवरोहन्तीति विपरीत फलप्राप्त्यर्थं प्रयत्नः। आन्दोलः पर्यङ्किका। इह हि स्वनिषेधो वैपरीत्यं गमयति। विषमालङ्कारे तु व्यत्यय इति भेदः।

अथान्योन्यालङ्कारः।
तदन्योन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्।

यत्र परस्परं क्रियाद्वारक मुत्पाद्योत्पादकत्वं तदन्योन्यालङ्कारः। यथा—

आरोहतानेन मठेश्वरेण व्याख्यानसिंहासन मेति शोभाम्।
व्याख्यानसिंहासन रत्नकान्त्या बिभर्ति शोभां मठराज्यनेता॥

यथा वा—
आरोहता तीर्थयतीश्वरेण प्रकाशते शाङ्करकेन्द्र पीठम्।
आरुह्य तेनोत्तम रत्नभासा बिभर्ति शोभां महितां यतीन्द्रः॥

व्याख्या—क्रियाद्वारक मिति। साक्षात् परस्पर जन्यजनक भावस्य विरुद्धत्वा दस्यापि विरोधमूलता। अत्र विद्यातीर्थ व्याख्यान सिंहासनयोरन्योन्यालङ्कारालङ्कार्यत्वम्।

अथ विषमालङ्कारः ।

अयं विरोधमूलः ।

विरुद्धकार्य स्योत्पत्तिर्यत्रानर्थस्य वा भवेत् ।
विरूपघटना चासौ विषमालङ्कृतिस्त्रिधा ॥

यत्र कारणाद्विरुद्ध कार्यस्योत्पत्तिः तदेकं विषमम् । अकार्य-भूतस्या नर्थस्योत्पत्तिः द्वितीयम् । विरूपयो र्वस्तुनोः संघटने तृतीयम् ।

प्रथमं यथा—

तमालनीलात्तव वादखड्गा
दुदाक्षिण्यकेन्द्रीयमठेन्द्र ! जाता ।
कीर्तिप्रभा शारदचन्द्रिकाभा
गङ्गे व शुक्ला भुवि कृष्णपादात् ॥

अत्र नीलवर्णात् वादखड्गाच्चन्द्रिकाधवला कीर्तिप्रभा जातेति विरुद्ध कार्यस्योत्पत्तिः ।

द्वितीयं यथा—

विद्वत्सभास्थानमुपागताना मास्तां जयाशा प्रतिपक्षभाजाम् ।
विलोकने नैव जगद्गुरोस्ते भ्रश्यन्ति वादैस्सह पुस्तकानि ॥

अत्र सभास्थानगमनोद्योगफलस्य न केवलं जयस्यानुत्पत्तिः; किं तु वादपुस्तकभ्रंशरूपानर्थोत्पत्तिरपि ।

व्याख्या—द्वितीयोदाहरणं स्पष्टम् ।

तृतीयं यथा—

गुरुरभिनव विद्यातीर्थ नामा मठेन्द्रो
मठगतबहुगव्यादुग्धतीर्थस्य दाता ।
इतितु मनसि मत्वा त्वां श्रितानां जनाना
मपि भवति जनन्याः स्तन्यदुग्धं दुरापम् ॥

इदमिष्टार्थ समुच्चमात् इष्टार्थान वाप्तौ अनिष्टावाप्तौ चोदाहरणम् ।

व्याख्या—गव्या गोसमूहः । 'खलगोरथा' दिति यः । क्षीराभिषेकतीर्थ मभिलषतां तीर्थगुरुमाश्रितानां मातृस्तन्यमपि दुरापमासी दित्यतः गुरुचरणाश्रितानां पुनर्जन्म नास्तीति प्रतीयते । तीर्थपानात् प्रागेव स्वामिदर्शनमात्रेणैव पुनर्जन्मराहित्यस्थितिरिति भावः ।

विरूपयोर्धटनं यथा—

क्व वा रागद्वेप प्रकृतिनिलयाः पार्थिवगणाः
क्वचेयं शुश्रूषा शमदमयुता श्रीमठगुरोः ।
इति श्रावं श्रावं मठगतनृपान् तीर्थयतिनां
प्रबोधं श्लाघन्ते दिशि दिशि मठाचार्यचरणाः ॥

व्याख्या—क्वेति, क्वेति महदन्तरं सूचयति । श्रावंश्रावं पुनः पुनः श्रुत्वा । आभीक्ष्ण्ये णमुलि द्विर्भावः । दिशि दिशि प्रतिदिशम् । यथार्थेऽव्ययी भावः । अव्ययीभावे 'शरत्प्रभृतिभ्य' इति समासान्तः ।

अत्ररागद्वेषप्रकृतीनां पार्थिवानां शमदमयुतगुरुशुश्रूषापराणां विरूपाणां संघटनम् ।

अथ समालङ्कारः ।

सा समालङ्कृतिर्योगे वस्तुनोरनुरूपयोः ।

यत्रान्योन्यानुरूप पदार्थसंघटना क्रियते स समालङ्कारः ।

यथा—

विधाताभिनवे विद्यातीर्थे विद्याः समं श्रिया ।
सदृक्षं संघटय्याद्य कृतार्थोऽभूच्चिरात् स्वयम् ॥

अत्राभिनवविद्यातीर्थे श्लाघ्ययोः लक्ष्मीसरस्वत्योर्योगः ।

अथ तुल्ययोगितालङ्कारः ।

प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः ।
औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥

यत्र केवल प्रस्तुतानां, केवलाप्रस्तुतानां वा समानधर्मसम्बन्धादौपम्यं गम्यते सा तुल्ययोगिता ।

प्रस्तुतानां यथा—

सिंहासनाध्यासिनि नव्यतीर्थे तत्कीर्तयस्तत्प्रतिपक्षभाजः ।
अहर्निशं भ्रान्तिविशेषयुक्ताः क्षणे क्षणे पाण्डुरतां व्रजन्ति ॥

अत्र कीर्तीनां प्रतिपक्षभाजां च प्राकरणिकत्वम् । पाण्डुरतां व्रजन्तीति समानधर्मः ।

व्याख्या—यत्रेति । तुल्यस्य योगोऽस्यां संजात इति तुल्ययोगितेत्यर्थः ।

अप्रस्तुतानां यथा—

व्यासजैमिनि काणाद गौतमागमदेशिकाः ।
हीनक्रिया मिथो जाता नव्यतीर्थे जगद्गुरौ ॥

अत्र व्यासागमादि देशिकानामप्राकरणिकत्वम् । क्रिया-हीना इति समानधर्मः । अत्र गम्यमानसौपम्यं न वास्तवं किंतु विवक्षाधीनम् ।

अथ दीपकालङ्कारः ।

प्रस्तुताप्रस्तुतानां तु सामस्त्ये तुल्यधर्मतः ।
औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥

यत्र प्रस्तुताप्रस्तुतानां समस्तानामेव समानधर्मसम्बन्धेनौपम्यं गम्यते तद्दीपकम् । तस्य धर्मस्यादिमध्यान्त गतत्वेन त्रैविध्यम् ।

आदि दीपकं यथा—

भात्याद्यं कपिलाचार्यैः त्रेता श्रीदत्तयोगिभिः ।
द्वापरो व्यासमौनीन्द्रैः कलिस्तीर्थ यतीश्वरैः ॥

अत्र यथा कपिल दत्त व्यासाचार्यैः कृतत्रेता द्वापराः शोभन्ते, तथाभिनव विद्यातीर्थेन कलियु शोभते इत्यौपम्यं गम्यते ।

व्याख्या—अत्र भातीत्यस्यादिवाक्यगतत्वात् आदिदी-पकम् । आद्यं कृतयुगम् ।

मध्यदीपकं यथा—

गङ्गया हिमशैलेन्द्रः भ्राजते ज्योत्स्नया विधुः ।
हंस्या सरोवरं विद्यातीर्थकीर्त्या दिगन्तरम् ॥

अत्र गङ्गादिभिः हिमाद्र्यादयः यथा तथा कीर्त्या जगद्गुरुः राजत इत्यौपम्यं गम्यते।

व्याख्या—अत्र भ्राजत इत्यस्य समानधर्मस्य मध्यवाक्यगतत्वात् मध्यदीपकम्। वरं निधिः श्रेष्ठं च।

अन्तदीपकं यथा—
ब्रह्मलोके सुरज्येष्ठः सुरलोके बृहस्पतिः।
मर्त्यलोके मठेन्द्रोऽय मुपदेष्टा जगद्गुरुः॥

अत्र उपदेष्टेति समानधर्मस्यान्तवाक्यगतत्वादन्तदीपकम्।

व्याख्या—यथा ब्रह्मलोकसुरलोकयोः ब्रह्मबृहस्पती उपदेष्टारौ तथा मर्त्यलोके जगद्गुरुरुपदेष्टेत्यौपम्यं गम्यते। समानधर्मः अन्तवाक्ये निर्दिष्टः।

अथ प्रतिवस्तूपमालङ्कारः।
यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि।
गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मता॥

यत्र वस्तुप्रतिवस्तु भावेन सामान्यं वाक्यद्वये निर्दिश्यते तेन गम्यौपम्या प्रतिवस्तूपमा। सा साधर्म्यवैधर्म्याभ्यां द्विविधा।

प्रथमा यथा
शङ्कराचार्य एवैकः क्षमो दुर्मतखण्डने।
नवीनतीर्थ एवैकः शक्तः षड्वैरिखण्डने॥

अत्र यथा दुर्मतखण्डने शङ्कराचार्यःक्षमः। तथा पड्वैरिखण्डने अभिनव विद्यातीर्थः शक्त इत्यौपम्यं गम्यते।

व्याख्या—गम्यौपम्येति। इवाद्यप्रयोगादिति भावः। अन्यथेयमुपमैव स्यादिति हृदयम्। तेन प्रति वस्तु प्रति वाक्यार्थं उपमा सामान्यं यस्यां सा प्रतिवस्तूपमा इत्यन्वर्था। पड् वैरिणः कामक्रोधादयः षट्। अत्र सम्बन्धिभेदेन क्षमशक्त शब्दाभ्यां एकस्यैव समानधर्मस्य कथनाद्वस्तुप्रतिवस्तु भावः।

द्वितीयं यथा

विद्यातीर्थोऽय मेवैकः पटुः पण्डित पोषणे।
विभावसोर्विना नान्यः शक्तो राजीवरञ्जने॥

अत्र सूर्येण यथा राजीवरञ्जनं क्रियते तथा जगद्गुरुणा पण्डितपोपणं क्रियत इति वैधर्म्येणौपम्यं गम्यते।

व्याख्या—विभावसुः सूर्यः। राजीवं पद्मम्।

अथ दृष्टान्तालङ्कारः।

यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते।
सामान्यधर्मो वाक्यज्ञैस्स दृष्टान्तो निगद्यते॥

यत्र बिम्बप्रतिबिम्बभावेन सामान्यं वाक्यद्वये निर्दिश्यते स दृष्टान्तः। यथा

मताधिपाः सन्ति सहस्रशोऽन्ये विद्यावतीमाहुरनेन भूमिम।
ताराग्रहव्रातसमावृतापि शोभावती चन्द्रमसैव रात्रिः॥

व्याख्या—मताधिपा इति। विद्याश्चतुर्दश। ताराः नक्षत्राणि। ग्रहा भौमादयः। समावृता व्याप्ता। अत्र विद्यावती शोभावतीत्यनयोः विम्वप्रतिविम्वभावः। प्राशस्त्ये मतुप्। विद्याशोभयोः प्राशस्त्य रूपं सादृश्य मत्र शाब्दम्।

अथ निदर्शनालङ्कारः।

असम्भवद्धर्मयोगादुपमानोपमेययोः।
प्रतिबिम्व क्रिया गम्या यत्र सा स्यान्निदर्शना॥

यत्रोपमानधर्मस्योपमेयगतत्वेन निबद्धस्य अन्वयासम्भवात् तत्सम्बन्धार्थं बिम्बप्रतिविम्वकरण माक्षिप्यते सैका निदर्शना। तद्विपर्यये द्वितीया निदर्शना।

उपमानधर्मस्योपमेये असम्भवाद्यथा—

कुमततिमिरहन्ता शारदापीठनेता
त्रिभुवनमहनीयो वज्रसिंहासनस्थः।
वहति महितशोभां विष्टपानन्दरूपा
मुदयगिरिशिरः श्रीचुम्बिनश्चित्रभानोः॥

अत्र चित्रभानोः शोभायाः प्रकृतेऽसम्भवात् शोभासदृशीं शोभां वहतीति बिम्वप्रतिबिम्वकरणाक्षेपः।

उपमेयधर्मस्योपमाने असम्भवाद्यथा—

शृङ्गशैलमठेन्द्रस्य यशोवैशद्यवैभवाः।
लक्ष्यन्ते रजताहार्यलीलामुकुरमण्डले॥

अत्र यशोवैशद्यस्य कैलासाचलादावसम्भवात् सादृश्योपगमेन बिम्बप्रतिबिम्बनं गम्यते।

अथ व्यतिरेकः।
भेदप्रधानसाधर्म्यमुपमानोपमेययोः।
आधिक्याल्पत्वकथनात् व्यतिरेकः स उच्यते॥

यत्रोपमानादुपमेयस्याधिक्येन न्यूनत्वेन वा प्रतिपादनेन भेदप्रधानं साधर्म्यमुपगम्यते। स व्यतिरेकालङ्कारः। यथा—

सवितरि कुमुदं विमुखं कुमुदबान्धवे कमलं पराङ्मुखम्।
मठभक्त महीशूरक्ष्माभुजि कुवलय कमले द्वे सुमुखे॥

अत्र सूर्यचन्द्रयोरसम्भवेन सर्वप्रियंकरत्वेन उपमेयभूतस्य मठभक्तस्य महीशूरक्ष्माभुजः आधिक्यम। 'कुवलयर्कमले द्वे सुमुखे' इत्यनेनोक्तमिति श्लेपसमुत्थापितोऽयं व्यतिरेकः।

व्याख्या—पराङ्मुखं प्रतिकूलम्। अयं तु कुवलयेन भूमण्डलेन कमलया लक्ष्म्याचाभेदाध्यवसिते कुवलयकमले द्वे सुमुखे इत्युपमानादुपमेयस्याधिक्यकथनं श्लेषमूलम।

अथ परिकराङ्कुरालङ्कारः।
साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः।
यथा—
वक्तुं गुरोर्गुणान् शेषो लिखितुं हैहयप्रभुः।
द्रष्टुं जिष्णुः सुराध्यक्षो दक्षः काहं क ते गुणाः॥

अत्र शेष इत्यादि विशेष्यपदानि सहस्रवक्त्राद्यभिप्राय-गर्भाणि।

व्याख्या—वक्तुमिति। स्वामिनं प्रति कवेरुक्तिः। हैहय-प्रभुः कार्तवीर्यार्जुनः। जिष्णुरिन्द्रः। एष मर्त्यधर्मा अहं क? गुरोस्ते गुणाः क्वेति कशब्दौन्महदन्तरं सूचयतः।

**अथाक्षेपालङ्कारः।**

विशेषबोधायोक्तस्य वक्ष्यमाणस्य वा भवेत्।
निषेधाभासकथन माक्षेपः स उदाहृतः॥

यत्र विशेषप्रतिपत्त्यर्थमुक्तवक्ष्यमाणयोः प्राकरणिकयोः निषेधा भासः कथ्यते स आक्षेपालङ्कारः।

उक्त विषये वस्तु वा कथनं वा निषिध्यते। वक्ष्यमाण विषये कथन मेव निषिध्यते। तत्रापि सामान्यरूपेण प्रतिज्ञाय विशेषरूपेण निषेधः। अंशोक्तावंशान्तरस्य वा निषेधः एवं चतुर्विधोऽयमाक्षेपः। क्रमेणैषामुदाहरणानि।

यथा—

मठेश्वरेश्वर स्वामिन्! न सन्देशहरा वयम्।
जगद्गुरोस्तवाशिष्य इति कश्चिन्न दृश्यते॥

अत्र जगद्गुरो स्तव शत्रुभावेन नालोकनीया मठाधिपाः। किं तु शिष्य रूपेण आदरणीया इति विशेष माक्षिपति। अन्यमठा-धिपानां संदेशहारिणा मुक्तौ 'न वयं संदेशहारिण' इति वस्तु निषेधः। स चानुपपद्यमानः तत्कालोचित कैतववचनपरिहारेण तत्त्ववादित्वे पर्यवसितः।

कथन निषेधो यथा—

वयमबोधहता इति भाषणं कथमिदं घटतेऽखिलबोधके।
अवितरुर्वजने च जगद्गुरा वशरणो ह्मवेति वचो वृथा॥

अत्र वयमबोधहता इति अशरणोऽह मित्येवसाद्यु क्तिकथन निषेधाभासरूपादवश्य मुपदेष्टव्यत्वादिविशेषः प्रतीयते वक्ष्य माण विषये सामान्यं प्रतिज्ञाय कथन निषेधो यथा—

सन्देहोऽस्माक मल्पोऽस्ति जगद्गुरु कुलोद्वह।
अथवा कोऽद्य सन्देहः सर्वज्ञे त्वयि बोधके॥

अत्र सन्देह इति सामान्यं प्रतिज्ञाय विशेषकथन निषेधाभासात् सर्वथा वयमुपदेष्टव्या इति विशेष आक्षिप्यते।

अंशोक्तावशान्तरस्य निषेधो यथा—

आदित्याभः स्वयं स्वामी हस्तदात्री च देवता।
खद्योतसन्निभा यूय मेवं यदि किमुक्तिभिः॥

अत्र महास्वामी महीयान्, यूयमल्पा इत्यंशोक्त्या यदि कि मुक्तिभि रित्यंशान्तर निषेधाभासेन सर्वथा प्रणामैः प्रसादनी यो गुरुः। न तु प्रतिवादित्व मवलम्बनीयं भवद्भिरिति प्रतिवादि मित्र वचनभङ्ग्या विशेष आक्षिप्यते। हस्तः अवलम्बनम्। समानार्थतया अनिष्ट विध्याभ्यासोऽप्याक्षेपः। इत्यभ्युपगम्यते। यथाचेष्ट निषेधस्यानुपपद्यमानतया आभासत्वं तथा अनिष्टविधेरप्यनुप पद्यमानतया आभासत्वम्।

यथा—

भारती तीर्थ शुश्रूषां त्यक्तुमिच्छसिचेत् त्यज।
अविद्यादेवतासेवावृत्ति रारभ्यते मया॥

अत्रानिष्टभूतं भारतीतीर्थस्वामि शुश्रूषात्यजनं तत्प्रतिवादि मित्रेण विधीयते। स विधिरनुपपद्यमान आभासे पर्यवस्यति। अविद्यादेवतासेवावृत्तिरारभ्यत इत्यनेन विध्याभास एवोपबृंहितः।

व्याख्या—विशेषेति। यत्रोक्तस्य वक्ष्यमाणस्य वा प्राकरणिकत्वेन विधातुमिष्टस्य, अतएव निषेधानर्हस्य यो निषेधो विशेषबोधार्थ मभिधीयमानः सन्नाभासोभवति स आक्षेप इत्यर्थः।

अथ व्याजस्तुत्यलङ्कारः।

निन्दया वाच्यया यत्र स्तुतिरेवावगम्यते।
स्तुत्या वा गम्यते निन्दा व्याजस्तुति रसौ मता॥

यत्र निन्दाकथनमुखेन स्तुतिर्गम्यते सा एका। यत्र च स्तुतिमुखेन निन्दा गम्यते सा द्वितीया व्याजस्तुतिः।

आद्या यथा—

यशसास्य यतीशस्य किं वाद्य धवलीकृतम।
नीलिमा दृश्यते यस्मान्मुखेषु प्रतिवादिनाम्॥

व्याखया—यशसेति। अत्र विशेषनिषेधे शेषाभ्यनुज्ञानमिति न्यायेन प्रतिवादि मुखव्यतिरिक्तं विश्वं कीर्त्या धवलीकृतमिति निन्दया महास्वामिनां स्तुतिर्गम्यते।

स्तुत्या निन्दा यथा—

अहो वेदमताधिक्यद्वेषिणां साहसं महत् ।
यद्विशन्ति मताभासान् मुक्त्यादीन् प्लवसंकुलान् ॥

निन्दाव्याजेन स्तुतिर्यथा—

का ते वादोद्धतिर्जेतुं त्वयि वाहनमास्थिते ।
वहुवाह समारूढा यतीन्द्र ! प्रतिवादिनः ॥

व्याख्या—गुरौ प्रतिवादिनः जेतुमेकं वाहन मारूढे सति सन्नद्धे सती त्यर्थः। प्रतिवादिनः तच्छ्रुत्वा तदानीमेव वहुवाहनारूढाः पलायन्ते। इति भावः। अनेन निन्दाव्याजेन जगद्गुरोः जयस्तुतिः गम्यते।

अथाप्रस्तुतप्रशंसालङ्कारः।

अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया।

यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुत वृत्तान्तावगति पर्यवसायि तत्रा प्रस्तुत प्रशंसालङ्कारः।

यथा—

एको धन्यः कवीन्द्रेषु भक्तेषु वसुधातले ।
यो वै महामहादन्यं न स्तौति न नमस्यति ॥

व्याख्या—एक इति। कवींद्रेषु यः महामहादन्यं न स्तौति स धन्यः। तथा भक्तेषु यः अस्मादन्यं न नमस्यति न प्रणमति स धन्यः॥ अत्राप्रस्तुत कवि भक्तप्रशंसा प्रस्तुतजगद्गुरु वर्णनपर्यव-

सायिनी। अत्राप्रस्तुतमहामह्वादन्यस्य कविस्तुत्यनर्हत्वस्य भक्तस्य नमस्कारानर्हत्वस्य च कथनात् प्रकृत शृङ्गगिरि मठाधीश्वर एव कविभिः स्तुत्यः। भक्तैर्नमस्कार्य इति प्रस्तुतवृत्तान्तः प्रतीयते॥

अथपर्यायोक्तालङ्कारः।

पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्।

यथा—

आलोकते यस्य पदं प्रपञ्चं नालोकते यस्य पदं प्रपञ्चः।
ताभ्यामुभाभ्यामपि वर्णनीया श्रीशारदापीठयतीन्द्रविद्या॥

अत्र गौतमः पतञ्जलिश्च स्वा साधारणरूपाभ्यां गम्यौ। रूपान्तराभ्यामभिहितौ।

व्याख्या—प्रपञ्चः लोकः। पदं पादः। अक्षि पादे यस्य सः अक्षपादः। तस्य गौतमस्य पादः लोकं पश्यति॥ अथ स लोकः पतञ्जलेः शेषावतारस्य पादं न पश्यति। तस्योरगत्वादिति भावः।

कारणं गम्यते यत्र प्रस्तुतात् कार्यवर्णनात्।
प्रस्तुतत्वेन सम्बद्धं तत्पर्यायोक्त मुच्यते॥

इति लक्षणान्तरम्। यथा—

प्रस्तुतकार्यवर्णनात् अप्रस्तुत कारणस्य गम्यत्वं यथा—

प्रक्षाल्य तत्र तुङ्गायां भवयात्रोद्भवं रजः।
नव्यतीर्थमहास्वामि दर्शनं कुर्वतेऽर्थिनः॥

अत्र महास्वामि दर्शनरूप प्रस्तुतकार्यंप्रति परागप्रक्षालनरूप वाच्यार्थानन्तरभावि रजोगुणत्यागस्य कारणत्वं प्रतीयते। तथा च त्यक्तरजोगुणानामेव स्वामिदर्शनलाभ इति परमार्थः।

अथ प्रतीपालङ्कारः।

आक्षेप उपमानस्य कैमर्थक्येन कथ्यते।
यद्वोपमेयभावः स्यात् तत्प्रतीपमुदाहृतम्॥

यत्रोपमेयस्य लोकोत्तरत्वादुपमानाक्षेपः क्रियते तदेकं। प्रतीपम्। यत्रोपमानस्योपमेयत्वं कल्प्यते तत् द्वितीयम्।

आद्यं यथा—

अहर्निशं यशस्यस्य विद्यातीर्थस्य राजति।
किमर्थं मुदयत्येष स्त्रपाहीनो निशापतिः॥

द्वितीयं यथा—

जगद्गुरुकुले श्रीमान् सर्वज्ञोऽयं न संशयः।
गीर्पतिः कथमेनेन स्वल्पज्ञै रुपमीयते॥

व्याख्या—आक्षेप इति। उपमेयेनैवोपमानकार्ये सिद्धे किमर्थं मुपमान मित्याक्षेप एकं प्रतीपम। यत्र प्रसिद्धोपमानस्य निकर्षार्थमुपमेयत्वक्लृप्तिः तद्द्वितीयम्। उभयत्रापि उपमेयस्य उपमानप्रातिकूल्यात्प्रतीप व्यपदेशः। प्रथमोदा हरणे कीर्तेरेव चन्द्रकार्य निर्वहणात् व्यर्थश्चन्द्रस्याविर्भावः। अपि चाहर्निशं प्रकाशमानायाः कीर्तेः सत्वात् केवलनिशाप्रकाशकः चन्द्रोदयः व्यर्थ इत्यभिप्रायः।

जगद्गुरुरिति। सर्वं जानातीति सर्वज्ञः शिवः। अत्रोपमानत्वेन प्रसिद्धस्य गीः पतेः निकर्षार्थमुपमेयत्वं कल्पितम्। तच्च विद्यातीर्थस्योपमानत्वे विवक्षायाः प्रयोजकम्।

अथ काव्यलिङ्गालङ्कारः।

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्ग मुदाहृतम।

यत्र हेतुर्वाक्यगतत्वेन पदगतत्वेन वा प्रतिपाद्यते तत्काव्य लिङ्गम्।

वाक्यार्थहेतुकं यथा—

अयमभिनव विद्यातीर्थं इत्यष्टवर्णो
वसति वचसियेषां मन्त्रराजः कवीनाम्।
नटति जगति वाणी तत्प्रणीतेषु शुद्धा
गुणरसभरितासावाहताचन्द्रतारम्॥

व्याख्या—अत्र वाणी वशीकरणे वाक्यार्थे अभिनव विद्यातीर्थाष्टाक्षरीप्राशस्त्यलक्षणो वाक्यार्थो हेतुः। अत्र काव्यग्रहणं तर्क वैलक्षण्यार्थम्। तेन व्याप्ति पक्ष धर्मतादयः न क्रियन्ते। अत एवानुमानादस्य वैषम्यमिति लभ्यते। आचन्द्रतारं चन्द्रतारा अभिव्याप्य।

अथार्थान्तर न्यासालङ्कारः।

कार्यकारण सामान्य विशेषाणां परस्परम्।
समर्थनं यत्र सोऽर्थान्तर न्यास उदाहृतः॥

यत्र कार्यकारण भावेन। सामान्यविशेषभावेन वा प्रकृत समर्थनं क्रियते सोऽर्थान्तरन्यासः।

कार्यकारणभावेन यथा—

विरजस्तमसस्तीर्थाः हे जिता मा पलायिताः।
उद्धतान् नमयन्त्येते ह्यु द्धरन्ते नतानपि ॥

अत्र फलरूपेणौन्नत्येन नतत्वकारणं समर्थितम्।

सामान्येन विशेषसमर्थनं यथा—

उद्वेजितास्तीर्थयतीश्वरस्य वादापदानैः प्रतिवादिमुख्याः।
त्रस्यन्त्यमी चित्र मचेतनेभ्यः त्रस्त्रास्यतुलासकरं हि सर्वम्॥

अत्र त्रस्तस्य सर्वत्रासकरमिति सामान्यमचेतनेभ्योऽपि प्रतिवादिमुख्यास्त्रस्यन्तीति विशेषं समर्थयति।

यथा वा—

अयमभिनव विद्यातीर्थ वेदान्तविद्या
श्रवण विमुखदोषः स्वात्मधाताय पुंसः।
विपिन विटपि शाखा भङ्गनादो यथास्या
न्मृगप शयनहारी मत्तनागस्य जन्तोः॥

मृगान् पातीतिमृगपः। शयनं निद्रा।

विशेषेण सामान्यसमर्थनं यथा—

दूष्योऽपि महतां सङ्गात् भूष्यो भवति संसदि।
नवीनतीर्थमभ्येत्य नास्तिकोऽप्यास्तिकायते॥

अत्र नवीनतीर्थसङ्ग महिम्ना नास्तिकः आस्तिकसदृश इति विशेषेण सामान्यसमर्थनम। कार्यकारणभावेऽपि कारणात् कार्य

समर्थनं काव्यलिङ्गेऽन्तर्भुतमिति तन्नोक्तम्। अतः प्रकारत्रय मर्थान्तरन्यासस्य।

व्याख्या — विरजइति। रजश्च तमश्च रजस्तमसी। विगते रजस्तमसी येषां ते विरजस्तमसः। रजस्तमोगुणरहिता इत्यर्थः। उद्वेजिता इति। उद्वेजिताः व्याकुलिताः। अपदानमद्भुतकर्म।

अथ यथासंख्यालङ्कारः।

उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम्।
अनूद्देशो भवेद्यत्र तद्यथासंख्य मिष्यते॥

यत्र येन क्रमेणोद्दिष्टाः पदार्थाः तेनैव क्रमेणानूद्दिश्यन्ते तत्र यथासंख्यालङ्कारः।

यथा—

वक्तृत्ववैदुष्यवदान्यभावान् जगद्गुरावत्र समीक्ष्य भूमौ।
फणीन्द्र वाचस्पतिकल्पवृक्ष सृष्टिं विधाता वितथामसंस्त॥

व्याख्या—उद्दिष्टानामिति। पूर्वं निर्दिष्टा उद्दिष्टाः। पश्चान्निर्देशोऽनूद्देशः। तेनात्र पूर्वपश्चात्पदे स्फुटार्थे। फणीन्द्रादिभ्योऽप्यधिकमस्य वक्तृत्वादिकमिति भावः। वक्तृत्वाद्युद्दिष्टक्रमेण फणीन्द्रादीना मनूद्देशाद्यथासंख्यालङ्कारः। एवं क्रमालङ्कार इति केचिदाहुः।

अथार्थापत्त्यलङ्कारः।

एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यदापतेत्।
कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रिया॥

यत्र कस्यचिदर्थस्य निष्पत्तौ तत्समानन्यायात् कैमुत्येनार्थान्तर मापतति सोऽर्थापत्तिरलङ्कारः। न चात्रानुमानशङ्का। कैमुत्यन्याय सम्बन्धरूपत्वात्। यथा—

पापानामेव मातॄणां दुग्धं दुर्लभमीक्ष्यते।
कावान्येषां कथा तीर्थपादतीर्थाम्बु पायिनाम्॥
ब्रह्मादिभिरजय्या ये त एव स्वामिसन्निधौ।
अन्तरारातयः शान्ताः का कथा बाह्यवैरिणाम्॥

व्याख्या—किमुतैव कैमुत्यम्। चातुर्वण्यादित्वात् स्वार्थेष्यञ् प्रत्ययः। यत्रेति। यथा दण्डभक्षणादपूप-भक्षणमर्थादापतितं तद्वत् कस्यचिदर्थस्य निष्पत्तौ तत्सामर्थ्यरूपात् समानन्यायादर्थान्तर मापतति सोऽर्थापत्त्यलङ्कार इत्यर्थः। अतएव सर्वस्वसूत्रं—'दण्डापूपिकयार्थान्तरापतनमर्थापत्ति' रिति। ब्रह्मादिभिरिति। जेतु मशक्याः अजय्याः। 'क्षय्यजय्यौ शक्यार्थे।' अन्तरारातयः कामक्रोधादयः।

अथ परिसंख्यालङ्कारः।

एकस्य वस्तुनःप्राप्तावनेकत्रैकदा यदि।
एकस्य नियमः सा हि परिसंख्या निगद्यते॥

यत्रैकं वस्तु युगपदनेकत्र सम्भाव्यमान मेकत्रैव नियम्यते सा परिसंख्या। सा प्रथमं द्विविधा पश्नपूर्विका तदन्यथा चेति। तयो र्द्वयोर्वर्जनीयस्य शाब्दत्वार्थत्वाभ्यां द्वैविध्ये चातुर्विध्यम्।

तत्र शाब्दवर्जनीया प्रश्नपूर्विका यथा—

किं भूषणंपृथिव्या गुरुकुल तिलको न गाङ्गेयकोशः।
को वर्ण्यः सुकवीनां सद्गुरु महिमा न सम्राट्प्रभावः॥

आर्थं वर्जनीया प्रश्नपूर्विका यथा—

का वा गङ्गा भूम्या मभिनव विद्यातीर्थश्रीकीर्तिः।
किं श्रेयो भारत्याः शृङ्गाद्रि जगद्गुरु जिह्वावासः॥

व्याख्या—कावेति। अत्र वर्जनीयस्य भागीरथ्यादेः चतुर्मुख मुखा वासादेरार्थत्वम्। अत्रवर्जनीयस्य कौमुद्यादेः आर्थत्वम्।

अप्रश्नपूर्विका आर्थवर्जनीया यथा—

भूरेव विष्टपं देवी शारदास्वैव सद्गुरुः।
श्रीविद्यातीर्थ एवैकः पुरी शृङ्गाद्रिरेव सः॥

व्याख्या—भूरे वेति। भूरेवेति न स्वर्गादिरित्यार्थवर्जनीया परिसंख्या। यथा वा—

धर्मं जगद्गुरावस्मिन् रक्षति क्षतदुर्मते।
यमराण्णिष्क्रियो जातः मघवा सन्ततक्रियः॥

व्याख्या—परिसंख्येति। परिर्वर्जने। कस्यचिद्वर्जनेन कुत्रचित्संख्यानं वर्जनीयत्वेन गणनं परिसंखयेत्यन्वर्थेयम्। किमिति। अत्र भूषणत्वेन प्राप्तयोः जगद्गुरु सुवर्णनिध्योः सुवर्ण-निधिं कण्ठोक्त्या वर्जयित्वा जगद्गुरौ नियमनात् शाब्दवर्जनीया प्रश्नपूर्विका परिसंख्येत्यर्थः।

अथ उत्तरालङ्कारः।

प्रश्नोत्तरयोर्बहुधा निबन्धने यथा—

किं द्रविणं गुरुसेवा को लाभः शारदापीठपूजा।
का नगरी शृङ्गेरी को वा गुरुरभिनव विद्यातीर्थः॥

अत्र बहुधा प्रश्नोत्तर निबन्धनादुत्तरालङ्कारः ।

अथ विकल्पालङ्कारः ।

विरोधे तुल्यबलयोर्विकल्पालङ्कृतिर्मता ।

अत्र तुल्यप्रमाणानुशिष्टयोर्विरुद्धयोः द्वयोर्युगपत्प्राप्तौ एकस्यासम्भवः तत्र विकल्पः । औपम्यगर्भत्वाच्चारुत्वम् ।

यथा—

सहन्तु वादधाटीं वा रीढां वा विमताधिपाः ।
पादच्छाया गुरोरस्य वनाद्रेर्वा निषेव्यताम् ॥

अत्र विद्यातीर्थे प्रभवति विमताधिपानां वादप्रतिवादाभ्यां तुल्यबलप्रमाणाभ्यां वादधाटीसहनरीढासहने युगपदेव प्राप्ते तयोर्विरुद्धत्वात् यौगपद्यासम्भवे विकल्पः ।

व्याख्या—पादच्छाया चरणच्छाया । अन्यत्र प्रत्यन्त पर्वतच्छाया । रीढा पराभवः ।

अथ समुच्चयालङ्कारः ।

गुणक्रियायौगपद्यं समुच्चयउदाहृतः ।

यत्र गुणानां नैर्मल्यादीनां क्रियाणां च दर्शनादीनां युगपदवस्थानं तत्र समुच्चयालङ्कारः ।

विषयभेदेन गुणसमुच्चयो यथा—

विद्यातीर्थे नवीनेऽस्मिन् सिंहासनमुपेयुषि ।
सुप्रसन्नं सतां स्वान्त मसतां मलिनं मनः ॥

क्रिया समुच्चयो यथा—

प्रविशति सभां मठेन्द्रे प्रविशति मौनं गलत्यहंकारः।
टलति मनश्चलति वपुः कलयति सभा तत्प्रतिवाद्यवस्थाम्॥

द्वितीयः समुच्चयः।

खलेकपोतन्यायेन बहूनां कार्यसाधने।
कारणानां समुद्योगः स द्वितीयः समुच्चयः॥

यत्रैकं कार्यं साधयितु महमहमिकया बहूनां कारणानामुद्यमः सोऽपि समुच्चय एव। युगपदनेकेषामवस्थानात्।

यथा—

वृत्तं पवित्रं विशदा समज्ञा विद्यानवद्या हृदयं विशालम्।
श्रृङ्गाद्रिपीठाधिपतेरमुष्य लोकोत्तरां रीति मुदाहरन्ति॥

अत्र वृत्तप्रभृतीनां लोकोत्तररीति सम्पादने प्रत्येकं हेतुत्वेऽपि युगपत् खलेकपोतन्यायेन सम्बन्धः।

व्याख्या—प्रविशतीति। टलति टल वैक्लव्ये भ्वादिः। खलेकपोतन्यायेनेति। यथा पाशच्छेदं प्रति सर्वेषां कपोताना मुद्यमः एवं कस्य चित्कार्यस्य साधने बहूनां कारणानामुद्यमे सोऽपि समुच्चय एवेति भावः।

अथ व्याघातालङ्कारः।

येन यत्साधितं वस्तु तेनैव क्रियतेऽन्यथा।
अन्येन तदलङ्कारो व्याघात इति कथ्यते॥

यद्वस्तु येन केनचित् कर्त्रा येन साधनेन साधितं। तद्वस्तु तेनैव साधनेन अन्येन कर्त्रा यदन्यथा क्रियते स व्याघातः।

यथा—

न जहाति गृही लोके संसारं सुखवाञ्छया।
यतिस्त्यजति संसारं तयैव ननु वाञ्छया॥

अत्र पूर्वोत्तरार्धे पक्षप्रतिपक्षरूपे कयोश्चिद्वचने इति लक्षणसङ्गतिः।

अन्तेवासीति वालोऽयं यदि मय्यस्ति ते घृणा।
अपरित्यज्य एवायं तव तीर्थे जगद्गुरो॥

अत्र जैत्रयात्रोन्मुखेन गुरुणा उत्तराधिकारिणः शिष्यस्य मठ एव स्थापने यत्कारणत्वेन सम्भावितं वाल्यं तदेव तद्विरुद्धस्य सह नयनस्यैव कारणतया शिष्येण परित्यागस्यायुक्तत्व दर्शयता समर्थ्यते।

यो बोधयति कर्माणि स तान्येव निरस्यति।
तादृग्वेदविदे तुभ्यं प्रणमामि जगद्गुरो॥

व्याख्या—यो बोधयतीति। यः वेदः पूर्वो भागः। कर्माणि स्वर्गादि भोगसाधनानि बोधयति, स वेदः। उत्तरभागः उपनिषद्भागः। तान्येव पूर्वोक्तकाम्यकर्माण्येव निरस्यति निराकरोतीत्यर्थः। तादृश कर्मज्ञान प्रतिपादक वेदविदे तुभ्यं जगद्गुरवे प्रणमामि।

अथोदात्तालङ्कारः।

तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते।

यत्र महासमृद्धि शालिनो वस्तुनो वर्णनं क्रियते तत्रोदात्तालङ्कारः ।

यथा—

शृङ्गाद्रि मठमाणिक्य स्तम्भेषु प्रतिबिम्बितैः ।
शिष्यैर्भक्तैर्वृतं तीर्थं वीक्ष्य हृष्यन्ति तैर्थिकाः ॥

व्याख्या—यत्रेति । कविप्रतिभाप्राप्तैश्वर्यमहासमृद्धिशालिन इत्यलौकिकत्व कथनादलङ्कारत्वम् । तीर्थः गुरुः ।

अथ परिवृत्त्यलङ्कारः ।
समन्यूनाधिकानां च यदा विनिमयो भवेत् ।
साकं समाधिकन्यूनैः परिवृत्तिरसौ मता ॥

समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः । समेन समपरिवृत्तिः, न्यूनेनाधिकपरिवृत्तिः, अधिकेन न्यूनपरिवृतिश्चेति ।

समेन समपरिवृत्तिर्यथा—
दत्त्वा सुधामुचो वाचः शृङ्गशैलमठेश्वरे ।
ततो लभन्ते कवयः प्रमुख श्रीमुखानि ते ॥
अत्र कवि वचसां मठेश्वर श्रीमुखानां च समत्वम् ।

न्यूनेनाधिक परिवृत्तिर्यथा—
कृत्वो पदां महाराजाः गजाजानेयसम्पदम् ।
विद्यातीर्थं मठेन्द्रस्य लभन्तेऽनुग्रहाशिषः ॥

अत्र त्यज्यमानादुपदादेरादीयमानस्य विद्यातीर्थस्य अनुग्रह पूर्वकस्याशीर्वादस्यैवाधिक्यम् ।

अधिकेन न्यूनपरिवृत्तिर्यथा—
मठभक्तैर्महाराजैर्जिता दुर्सतपालकाः ।
शवरेभ्यः परिष्कारान् दत्त्वा गृह्णन्ति वल्कलान् ।।

अत्र त्यज्यमानात् परिष्कारादाभरणादादीयमानस्य वल्कला देर्न्यूनत्वम् ।

व्याख्या—कृत्वेति । उपदा उपायनम् । 'उपायनमुपग्राह्य-मुपहारस्तथोपदा' इत्यमरः । आजानेया उत्तमाश्वाः । आजेन क्षेपेणानीयाः प्रापणीया आयत्ता वा । 'अज गति क्षेपणयो' रिति घञ् । 'शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदे पदे, आजानन्ति यतः संज्ञा माजानेया स्ततः स्मृताः ।' इत्यश्वशास्त्रम् ।

पालकाः रक्षका राजानः । परिष्कारः भूषणम् । 'अलङ्कारस्त्वाभरणं परिष्कारोऽपि भूपण' मित्यमरः । वल्कलं वल्कं लातीति स्वामी । वलतेः कलजिति मुकुटः । वल्कलानिति बहुवचनेन वनचरवृत्तेरावश्यकवस्तूनीत्यर्थः । गृह्णन्ति ग्रह उपादाने । उपादानं प्रतिग्रहः ।

अथ कारणमालालङ्कारः ।

पूर्वपूर्वं प्रत्युत्तरोत्तरस्य कारणत्वम्, उत्तरोत्तरं प्रति पूर्वपूर्वस्य कारणत्वम् ।

पूर्वपूर्वं प्रत्युत्तरोत्तरस्य कारणत्वे यथा—

दुःख्यन्ति देहिनो देहात् देहः कर्मसमुद्भवः।
कर्म रागादिना राग स्त्वविवेकात् खलु प्रभो ॥

अत्र पूर्वपूर्वं प्रत्युत्तरोत्तरस्य हेतुत्वम्।

व्याख्या—दुःख्यन्ति दुःखमनुभवन्ति।

**अथासम्भवालङ्कारः।**

असम्भवोर्थनिष्पत्ते रसम्भाव्यत्ववर्णनम्।

कस्यचित्पदार्थस्य निष्पत्तेः असम्भावनीयत्ववर्णन मसम्भवो नामालङ्कारः।

यथा—

सर्वसङ्गपरित्यागी नव्यतीर्थोऽर्थिकल्पकः।
को भवेदिति जानाति भूतिदस्त्वादिभिक्षुवत् ॥

अत्र सर्वसङ्गपरित्यागी नव्यतीर्थः अर्थिकल्पको भवेदिति को जानीते। अत्र सर्वसङ्गपरित्यागिनः कल्पवृक्षनिष्पत्ते रसम्भाव्यत्व वर्णनाल्लक्ष्ये लक्षणसङ्गतिः।

व्याख्या—आदिभिक्षुवदिति। उपमोपस्कृतोऽयमलङ्कारः। आदिभिक्षुरीश्वरः।

**अथ सारालङ्कारः।**

उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते।

यथा—

नरो महान् नराद्वर्णी वर्णिनोऽपि महान् गृही ।
गृहिणोऽपि महान् भिक्षुः भिक्षोः पीठाधिपो महान् ॥
"मनसस्तु परा बुद्धिः बुद्धे रात्मा महान् परः ।
महतः परमव्यक्त मव्यक्तात् पुरुषः परः ॥"

व्याख्या—वर्णी ब्रह्मचारी । अत्र द्वयोरुदाहरणयोः श्लाघ्य गुणोत्कर्षः ।

अथ विषादनालङ्कारः ।

इष्यमाण विरुद्धार्थसम्प्राप्तिस्तु विषादनम् ।

यथा—

संसद् भविष्यति चलिष्यति युक्तिवादः
बौद्धं च जेष्यति न शिष्यति वेदवादः ।
इत्थं विचिन्तयति बौद्धगुरौ कृता ज्ञैः
हा हन्त हन्त सुगतोक्ति रनासरूपा ॥

व्याख्या—संसदिति । चलिष्यति । 'चल विलसने ।' तुदादिरकर्म कः । ज्ञैः पण्डितैः । "धीरो मनीषी ज्ञः प्राज्ञ" इत्यमरः । संसत् सभा । श्रृङ्गगिरि सभेति यावत् ।

अथावज्ञालङ्कारः ।

ताभ्यां तौ यदि न स्याता मवज्ञालङ्कृतिस्तु सा ।

ताभ्यां गुणदोषाभ्याम् । तौ गुणदोषौ । अत्र कस्यचिद्-गुणेन अन्यस्य गुणालाभे एको भेदः । दोषेण दोषस्याप्राप्तौ द्वितीयो भेदः । यथा—

संकुचन्ति यदि द्वैतिसुखपद्मादि भूतले।
अद्वैति मुख शुभ्रांशोः का क्षतिर्जगतीतले॥
इयमभिनव विद्यातीर्थ वाक्यार्थघाटी
यदि मदयति धीरान् किं विलक्षादरैः स्यात्।
ध्वनिरसगुणविज्ञै र्भूपिता काव्यकन्या
प्यरसिक हृदयान्तर्हारिणी नो यथा स्यात्॥
कापायंधरसीति चेत्किमुभवेत् क्षौमाम्बराणां क्षतिः
वैणं दण्डमुपाससे यदि भवेत् का न्यूनता स्वस्तरोः।
रुद्राक्षं श्रयसीति चेदपयशः किं नाम मुक्तावले
राचार्योऽसि नवीनतीर्थ! जगतामीशोऽसिकिंत्रू महे॥

प्रथमोदाहरणे दोषेण दोपस्याप्राप्तिः कथिता, अत्र रूपकोपस्कृतः अवज्ञालङ्कारः। द्वितीये वाक्यार्थघाटी कविता गुणाभ्यां रसिक हृदयोल्लास रूप गुणाभावो वर्जितः। तृतीये तु जगद्गुरो रनङ्गीकरणदोषेण क्षौमाम्बरादीनां क्षत्यादि दोषाभावो वर्णितः।

व्याखया—संकुचन्तीति। शुभ्रांशुः चन्द्रः। इयमिति। मदयति तोपयति। धीरः विद्वान्। विलक्षः लक्ष आलोचने। भ्वादिः। विलक्षो विगतालोचनः। आलोचना रहिताना मादरैः किमित्यन्वयः वीणासम्बन्धि वैणम्। स्वस्तरः कल्पवृक्षः।

अथानुज्ञालङ्कारः।
दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्।
यथा—
अभिकांक्षन्ति संदेहान् भूयो भूयो विपश्चितः।
यस्मिन् जगद्गुरोरस्माल्लभन्ते ज्ञानवैभवम्॥

व्याख्या—अभिकांक्षन्तीति। विपश्चित् विद्वान्। यस्मिन् सन्देहे ज्ञान वैभवम् विद्यावैभवम्।

अथ लेशालङ्कारः।

लेशः स्याद्दोषगुणयोर्गुणदोषत्व कल्पनम्।

दोषस्य गुणत्वकल्पनं, गुणस्य दोषत्वकल्पनं च लेशः।

यथा—

स्वेच्छाचार निरोधिनः सुचरिताः श्रीमद्गुरोः सेवकाः
सर्वत्रापि जनापवाद चकिताः क्लेशं सहन्ते सदा।
नैव व्याकुलतामुपैति सदसत्कार्यैरबोधोदयः
योग्यायोग्यविचारशून्यहृदयो धन्यो जनः पामरः॥

व्याख्या—स्वेच्छेति। अत्र पूर्वार्धे मठसेवकानां सुचरितत्वस्य गुणस्य क्लेशसहनहेतुतया दोषत्वं कल्पितम्। उत्तरार्धे पामराणां अव्याकुलत्व दोषस्य योग्यायोग्यविचारशून्यहृदयानुकूलतया गुणत्वं कल्पितम्।

अथात्मतुष्टि प्रमाणालङ्कारः।

असंशय मसौ गुरुः परमहंससम्राड् यतिः
यतो मम मनस्सदा लगति लब्धिमं तद्गुरौ।
ससंशयपदे सतां हि भवति स्वयं निर्णये
प्रमाण मकुतो भया नियतचित्तवृत्तिः परम्॥

अत्र कविना स्वात्मतुष्ट्या जगद्गुरु शुश्रूषाया अवश्यकर्तव्यत्वं श्रुत्यनुमत मनुमीयते।

व्याख्या—असंशयमिति। कुटीचक, बहूदक, हंस, परमहंस इति यतयश्चतुर्विधाः। तत्र परमहंसा उत्कृष्टाः। तेष्वपि सम्राडयं महामठेश्वर इति भावः। लब्भ्रिमं लाभनिवृत्तं। वृप्तमित्यर्थः। डुल भष् प्राप्तावित्यस्माद्धातोः 'ड्वितः क्त्रि' रिति क्त्रि प्रत्ययः। क्त्रेर्मम्। ससंशयपदे सन्दिग्धवस्तुनि सतां चित्तवृत्तिरन्तः करण-प्रवृत्तिः परमुत्कृष्टं प्रमाणमित्यात्मतुष्टिप्रमाणालङ्कार :।

अथ लोकोक्त्यलङ्कार।

लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते।

यथा—

नामैव ते वदति विद्वदपश्चिमं त्वां।
विद्यागुरुं किमनया विरुदप्रणुत्या।
लोकप्रसिद्धरणीसुरवंशजाते
यज्ञोपवीतभरणं खलु न ह्यपेक्ष्यम्॥

अत्र उत्तरार्धं लोकोक्त्यनुकरणम्।

---

इति कनकाम्बा सीतारामपुत्र, चिदम्बरकवीन्द्रसौभ्रात्रपात्र व्याकरण विद्याविशारद अभिनव विद्यानाथ शतावधानि पिशुपाटि सुब्रह्मण्यशास्त्रिप्रणीतेऽभिनव विद्यातीर्थयशोभूषणेऽलङ्कारप्रकरणम्।

---

व्याख्या—अपश्चिमं श्रेष्ठम्। प्रणुतिः स्तुतिः।

---

इति भारद्वाजसगोत्राभ्यां श्रीसदनसूयादेवी सुब्रह्मण्यशास्त्रि सूनुभ्यां विश्वजनीनविद्याभ्यां सीतारामशास्त्रिज्ञानानन्द शर्मभ्यां विरचितेऽभिनव विद्यातीर्थयशोभूषणव्याख्यानेप्रकाशाख्याने अलङ्कारोदाहरण निरूपणं नाम तृतीयं प्रकरणम् ।

---

# यशोभूषणे शुद्धाशुद्ध पत्रिका

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | भूमिका | पादुक | पादक |
| ३ | ३ | न्य | ण्य |
| १० | २० | सूचक्रात् | सूचकान् |
| २२ | २ | ग्या | ग्रथा |
| २५ | ८ | दुःखवोध | दुर्वोध |
| ३० | २१ | ष्वात्म | प्यात्म |
| ४७ | ७ | तत्रै | यत्रै |
| ४६ | १३ | भृवा | भृता |
| ५६ | ७ | लोकं | लोपं |
| ५७ | | त्प्रोक्षा | त्प्रेक्षा |
| ६० | १३ | कलाद्यः | कलाढ्यः |
| ६४ | ६ | मूढोऽमिति | मूढोऽर्यामिति |
| ६६ | १२ | प्रभ्रतीनां | प्रभृतीनां |
| ६८ | २१ | भक्तया | भक्त्या |
| ७२ | १ | भह्वलैः | भयविह्वलैः |
| ७८ | १६ | कलियु | कलियुगं |
| ८३ | ५ | क्वशब्दौन्म | क्वशब्दौमह |
| ९० | ७ | त्रस्तास्य | त्रस्तस्य |
| ९० | ७ | लासत्व | त्रास |
| ९४ | १४ | समूर्च्छया | समुच्चया |
| ९९ | ९ | त्यज्यं | त्याज्य |
| १०२ | १७ | लब्धिंमं | लब्धिभ्रमं |
| १०३ | | रणी | धरणी |